परोक्षानुभवकार्य्यानुमेयो योग्यताख्यः संबन्धः। पर-पक्षेऽपि संयुक्तविशेषणविशेष्यभावादिरिति। संयोग-समवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेन्न। विशिष्टप्रत्ययवशेन तत्सिद्धेरिति। अनिर्द्दिष्ट-प्रवक्तृकं प्रवादपारंपर्य्यमैतिह्यमागमेऽन्तर्भूतम्। यथेह वटे यक्षः प्रतिवसतीति।

प्रयत्नजनिता शरीरतदवयवक्रिया चेष्टा। सा त्वनाद्यशास्त्रादिप्रसिद्धसमयबलेन पुरुषाभिप्रायमर्थ-विशेषं गमयतीति नागमाद्भिद्यते। लिप्यक्षरादर्थ-प्रतिपत्तिवदिति। तदेवं व्यवस्थितम्। एवमेतानि त्रीण्येव प्रमाणानि।

किं पुनरेभिः प्रमाणैः प्रमातव्यमिति। उच्यते। प्रमेयम्। किं लक्षणम्। यद्विषयं ज्ञानमन्यज्ञानानुप-योगित्वेन निःश्रेयसाङ्गं भवति तत्प्रमेयम्। तदेव तत्त्वतो ज्ञातव्यम्। सर्व्वदा भावयितव्यञ्च। नच कीट-संख्यादि तद्ज्ञानस्यानुपयोगित्वात्। तच्चतुर्विधम्। हेयं तस्य निर्व्वर्त्तकं ज्ञानमात्यन्तिकं तस्योपाय इति।

तत्र हेयं दुःखमनागतमेकविंशतिप्रकारम्। शरीरं षड़िन्द्रियाणि षड़्विषयाः षड़्बुद्धयः सुखं दुःखं

चेति। तत्र शरीरं दुःखायतनत्वाद्दुःखं इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात् सुखमपि दुःखानुषङ्गाद्दुःखम्। दुःखन्तु बाधापीड़ासन्तापात्मकं सुख्यतयैवेति। तस्य निर्वर्त्तकमसाधारणकारणम्। अविद्यातृष्णे धर्माधर्मौ चेति सम्यगध्यात्मविद्भिः प्रदर्शितार्थे।

विपरीतज्ञानमविद्या सह संस्कारेणेति। पुनर्भवप्रार्थना तृष्णा। सुखदुःखयोरसाधारणौ हेतू धर्म्माधर्म्माविति च। हानं दुःखविच्छेदः। आत्यन्तिकमिति न कदाचित्कथञ्चित् दुःखसंबन्ध इत्यर्थः। तस्योपायस्तत्त्वज्ञानमात्मविषयम्।

तथाचोक्तम्। आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।

मत्वा च सततं ध्येय एते दर्शनहेतवः॥

तरति शोकमात्मविदिति।

स च द्विविधः। परश्चापरश्चेति। तथाचोक्तम्। "द्वे ब्रह्मणी वेदितव्ये परं चापरं चेति"। तत्रैश्वर्य्यादिविशिष्टः संसारधर्म्मैरीषदप्यसंस्पृष्टः परो भगवान्महेश्वरः सर्वज्ञः सकलजगद्विधाता। स कथं ज्ञातव्यः।

अनुमानादागमाच्च । तथाहि विवादाध्यासितमुपलब्धिमत्कारणपूर्वकं अभूत्वाभावित्वाद्वस्त्रादिवदिति सामान्यव्याप्तेरनवद्यत्वेन निराकर्त्तुमशक्यत्वात्तत्सामान्यसिद्धौ पारिशेष्यात्कार्य्यत्वाच्च कर्त्तृविशेषसिद्धिश्चित्रादिकार्य्यविशेषात्कर्त्तृविशेषसिद्धिवत् । एको रुद्रो न द्वितीयोऽथ तस्थे सूर्य्य इव इमांल्लोकानीशते ईशनीभिरित्यागमाच्चेति । संसारफलोपभोक्तानन्तो जीवोऽपरः ।

स खलु बुद्ध्यादिगुणानामाश्रयभूतोऽनुमातव्यः । न हि कार्य्यमनाधारं किञ्चिदुपलब्धमिति । न चेन्द्रियाणामाश्रयत्वं युक्तमुपहतेन्द्रियस्य विषयस्मरणायोगात् । अन्यानुभूतेऽर्थेऽन्यस्य स्मरणायोगात् । अतएव शरीरस्यापि बालकौमारादिभेदेन भिन्नत्वान्न स्मरणमेतेन पूर्व्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धेः कार्य्यकारणभावात् स्मरणमपास्तम् । अन्यत्वाविशेषादिति । कार्पासरक्ततावदिति चेन्न । साधनदूषणासम्भवात् । अन्वयाद्यभावान्न साधनत्वमसिद्धत्वाद्यनुद्भावनान्न दूषणम् ।

न च कार्पासेऽपि निरन्वयविनाशोत्पादे रक्ततोप-

पद्यते कार्पासान्तरवदिति । एतेनैव क्षणिकत्वमपास्तम् । प्रत्यभिज्ञानाख्येन प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यते । प्रदीपादिष्विव भ्रान्तमिति चेत् । न । एकत्र बाध्यत्वेन भ्रान्तत्वे सर्वत्र भ्रान्तत्वकल्पनायामतिप्रसङ्गादनभ्युपगमाच्च । सादृश्यस्य क्षणिकत्वे भ्रान्तिबीजाभाव इति ।

तत्सिद्धमेतच्छरीरादिव्यतिरिक्त आत्मा नित्यो व्यापक इति । नित्यत्वं कुत इति चेदनादित्वात् । तदेव कथम् । जातमात्रे जन्मान्तरानुभवसूचकस्मरणलिङ्गस्य हर्षभयशोकमोहस्तन्यादेरुपलम्भात् । धर्म्मादेराश्रयसंयोगापेक्षस्य गुरुत्वादिवदाश्रयान्तरे वाय्वादौ क्रियाकर्त्तृत्वात् । अणिमाद्युपेतस्य युगपदनेकशरीराधिष्ठातृत्वाद्व्यापकत्वसिद्धिः । तथाचोक्तम् ।

आत्मनो वै शरीराणि बहूनि मनुजेश्वर ।
प्राप्य योगबलं कुर्य्यात् तैश्च कृत्स्नां महीं चरेत् ॥
भुञ्जीत विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत् ।
संहरेच्च पुनस्तानि सूर्य्यस्तेजोगणानिव ॥

तदेवमपरात्मतत्त्वज्ञानं परलोकसद्भावेन परलोकप्रवृत्त्युपयोगित्वादधर्म्मक्षयहेतुत्वाच्च निःश्रेयसाङ्गमिति ।

आत्मतत्त्वज्ञानं तदुपासनाङ्गत्वेनापवर्गसाधनम्। स चोपासनविधिः क्लेशकर्म्मक्षयसमाधिलाभार्थमनुष्ठानम्। तथाचोक्तम्। तपःस्वाध्यायेश्वरप्रणिधानादिक्रियायोगः क्लेशतनूकरणार्थं समाधिलाभश्चेति। तत्रोन्मादकामादिव्यपोहार्थमाध्यात्मिकादिदुःखसहिष्णुत्वन्तपः। प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्यायः। परमेश्वरतत्त्वस्य प्रबन्धेनानुचिन्तनमीश्वरप्रणिधानम्।* समासतो रागद्वेषमोहाः क्लेशाः समाधिप्रत्यनीकाः संसारापत्तिद्वारेण क्लेशहेतुत्वात्। इति॥

तथा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि। तत्र देशकालव्यवस्थाभिरभिनियता बुद्धिशुद्धिहेतवो यमाः। अहिंसासत्यमस्तेयादयो देशकालव्यवस्थापेक्षिणः पुण्यहेतवः क्रियाविशेषा नियमाः देवताप्रदक्षिणसन्ध्योपासनजपादय इति। योगकर्म्मविरोधिक्लेशजयार्थं करणबन्ध आसनम्। पद्मकस्वस्तिकादि। कौष्ठस्य वायोर्गतिविच्छेदः प्राणायामो रेचकपूरककुम्भकप्रकारः। स च

* Ms. C. reads :—अनुचिन्तनं पर्य्यालोचनं प्रणिधानम् ईश्वरस्य।

शनैर्जेतव्यो वनगजेन्द्रवत् । समाधिप्रत्यनीकार्थेभ्यः समन्ताच्चेतसो व्यावर्त्तनं प्रत्याहारः । चित्तस्य देशबन्धो* धारणा । तत्रैकतानता ध्यानम् । तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः । ध्यानोत्कर्षात् निर्वाताचलप्रदीपावस्थानमिवैकत्र चेतसो व्यवस्थानं समाधिरभिधीयते ।

एवमेतानि योगाङ्गानि मुमुक्षुभिः सर्वेषु ब्रह्मादिस्थानेष्वनेकप्रकारदुःखभावनयानभिरतिसञ्ज्ञितं परं वैराग्यं महेश्वरे च परां भक्तिमाश्रित्यात्यन्ताभियोगेन सेवितव्यानि । ततोऽचिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति । तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति । तथाचोक्तम् ।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमयं ज्ञात्वा† दुःखस्यान्तो भविष्यति ॥

तमेव विदित्वातिमृत्युमेतीत्यादि च । तस्माच्छिवदर्शनान्मोक्ष इति ।

कः पुनरयं मोक्ष इति । एके तावद्वर्णयन्ति । समस्तगुणोच्छेदे संहारावस्थायामाकाशवदात्मनोऽ-

---

* C. reads देशसम्बन्धो ।　　† Ms. C. reads :—विज्ञाय ।

त्यन्तावस्थानं मोक्ष इति। कस्मात् सुखदुःखयोर-विनाभावित्वाद्विवेकहानानुपपत्तेः। न च सुखार्थे च प्रेक्षावतां प्रवृत्तिः कण्टकादिपरिदुःखपरिहानार्थत्वे-नापि प्रवृत्तेरुपलम्भात्। इति मोहावस्थामूर्च्छाद्य-वस्थावदत्र विवेकिनां प्रवृत्तिर्नेत्याहुः।

अन्ये दुःखे सति सुखोपभोगस्यासम्भवात् कण्ट-कादिदुःखपरिहारोऽपि सुखोपभोग एवेत्यन्यसमो दृष्टान्तः। कुतो मुक्तस्य सुखोपभोग इति चेत्। आगमात्। उक्तं हि।

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।
तन्त्र मोक्षं विजानीयात् दुष्प्रापमकृतात्मभिः॥

तथा आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिलक्ष्यते। विज्ञानमानन्दं ब्रह्मेति।

मुख्यार्थे बाधकाभावान्नोपचारकल्पनान्यथासुख-संवेदनयोर्नित्यत्वात् मुक्तसंसारावस्थयोरविशेषप्रसङ्गः। इति चेन्न। न चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोः सम्बन्धो भवतीत्यतो नाविशेष्यः। तस्य कृतकत्वेन कदाचिन्नाशप्रसङ्ग इति चेन्न। न प्रध्वंसोऽनैकान्त्यात्। वस्तुतत्त्वे सतीति चेन्न। द्रव्यादिष्वनन्तर्भावे तदसिद्ध-

त्वात् । अन्तर्भावे समवायादिभिः सह तत्संवेदन-सम्बन्धो न स्यात् ।

अदृष्टादिवशात् कर्म्म कारकं विषयः तज्जनितं ज्ञानं विषयीति चेत् न । ईश्वरज्ञानस्य नित्यार्थैः सह सम्बन्धाभावप्रसङ्गात् । तस्मात् कृतकत्वेऽपि सुखसंवेदनसम्बन्धस्य विनाशकारणत्वाभावान्नित्यत्वं स्थितम् । तत्सिद्धमेतत् नित्यसंवेद्यम् । अनेन सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति । *

इति [श्रीभासर्वज्ञविरचिते न्यायसारे]†

आगमपरिच्छेदः ।

समाप्तोऽयं न्यायसारः ।

शुभमस्तु ।

---

* Ms. C. adds here :—

जिताः समुद्रा गुरुभिर्मदीयैः रत्नं ददद्भिस्त्रिदशैरलभ्यम् ।
प्रदीयमाणं सततं द्विजेभ्यः प्रवर्द्धते चैव करोति मुक्तिम् ॥
आचार्य्यमारभ्य मयापि लब्धं तन्न्यायरत्नं स्वपरोपकारि ।
उत्सर्गितं स्वल्पपदैर्निबध्य संसारमुक्त्यै खलु सज्जनानाम् ॥

† B. adds the portion bracketed.

# न्यायतात्पर्यदीपिका ।

## प्रत्यक्षपरिच्छेदः ।

ॐ नमः परमात्मने ।

यत्तत्त्वं ध्वनयत्यनक्षविषयं चित्तारतम्यानुमा
प्रत्यात्मप्रतिभासभासुरतनुर्निर्दोषतोत्कर्षिणी ।
चक्षुःप्राग्रहरं हृषीकनिकरं रूपादिवद्धियंथा
तं सर्वज्ञमपास्तदुस्तरतमःस्तोमं जिनेन्द्रं स्तुमः ॥ १ ॥

न्यायग्रन्थिसहस्रदुर्ग्रहमिमं श्रीन्यायसारं स्फुटा-
शेषोल्लेखविशेषतो यदपि न व्यक्तुं क्षमः कश्चन ।
श्रद्धावांस्तनुधीप्रवुद्धिविधये किञ्चित्तथाप्युच्चकै-
र्वाग्देवीस्वगुरुप्रसादविशदो व्याख्यातुमिच्छाम्यहम् ॥ २ ॥

यद्यप्यत्र पवित्रसूत्रघटितास्टीकाः पटूनच्छिदो
दीव्यन्त्यच्छपटीनिभाः प्रकरणे श्रीन्यायसाराह्वये ।
तत्त्वन्यायपदार्थसार्थघटयत्पाटच्चरांशस्फुटा
सेयं जाड्यहरी तथापि भविता मद्वाक्यकन्या नृणाम् ॥ ३ ॥

शास्त्रारम्भे दुरपोहप्रत्यूहव्यूहव्यपोहेन प्रचिकीर्षितन्याय-साराख्यतर्कप्रकरणपारीणतायै शिष्टाचारसमाचरणाय च समु-चितेष्टदेवतानमस्कारसारं प्रेक्षावत्प्रवृत्तिनिमित्तं सम्बन्धप्रयोजना-नवद्यं शास्त्रप्रतिपाद्यं शास्त्रकारचक्रचक्रवर्त्ती श्रीभासर्वज्ञाचार्य्यः प्रथमपद्येन प्रतिजानीते।

प्रणम्य शम्भुं जगतः पतिं परम्<br>
समस्ततत्त्वार्थविदं स्वभावतः।<br>
शिशुप्रबोधाय मयाभिधास्यते<br>
प्रमाणतद्भेदतदन्यलक्षणम्॥

अत्राह परः।

ननु प्रकृतप्रकरणकरणमवगणय्यादावेव किमर्थं देवतानम-स्काराविष्करणम्। विघ्नोपशमार्थमिति चेत् न। किं नम-स्कारादेव विघ्नोपशम उतान्यस्मादपि। यद्याद्यः कल्पस्तर्हि किं यत्र यत्र नमस्कारस्तत्र तत्र विघ्नोपशमः। किंवा यत्र यत्र विघ्नोपशमस्तत्र तत्र नमस्कार इति। तत्राद्यो न निरवद्यः। कादम्बर्य्यादौ नमस्कारे सत्यप्यपरिसमाप्त्या तदनुपलम्भात्। तर्कप्रकरणेष्वेवायं नियम इति चेन्न। तेष्वपि केषुचिन्नमस्कार-पुरस्कारेऽप्यपरिसमाप्त्युपपत्तेः। न द्वितीयः मीमांसाभाष्यादौ विघ्नोपशमोपालम्भेऽपि तत्प्रारम्भे नमस्कारानाविष्कारात्। तस्य तु तत्समाप्त्यैव निर्णीतत्वात्।

किञ्च नमस्कारादेवेत्यत्रैवकारो नमस्कारेण समं विघ्नोपशमस्यान्ययोगं व्यवच्छिनत्ति। स च प्रागुक्तव्यभिचारयुक्त्या न प्रमाणकोटिमाटीकिष्ट। नाप्यन्यस्मादपीति पक्षः सूपक्षेपः। सर्वत्रापि नियमेन तदुपादानस्यैव दृश्यमानत्वात्।

यद्वान्यस्मादपि साध्यसिद्धौ प्रेम्णा तस्यैवोपादानं बाललीलायितं कल्पयेत्।

अपिच। नमस्कारादित्यत्रापादानोपादानं विघ्नोपशमं प्रति नमस्कारस्य निमित्तत्वं जनकत्वेन व्यञ्जकत्वेन वा व्यनक्ति। जनकत्वेन चेत्तर्हि किं नित्योऽनित्यो नित्यानित्यो वा स तज्जनकतयाभिप्रेयाणः। नित्यश्चेन्न नित्यस्य जनकत्वानुपपत्तिः। शश्वदेकस्वाभाव्यात्। प्राक् पश्चाच्चातज्जनकत्वे शास्त्रारम्भ एव तज्जनकत्वे चैकस्वभावहान्या नित्योऽप्यनित्यतां सत्यापयेत्। अप्रच्युतानुत्पन्नस्थिरैकरूपं नित्यमिति नित्यलक्षणात्। सहकारिकारणजनितसाहाय्यात् तज्जनको भविष्यतीति चेन्न। सहकारिकारणस्य तत्साहाय्यकारित्वेनाद्याप्यप्रसिद्धत्वात्। प्रसिद्धत्वे वा तत्साहाय्यस्य भेदाभेदोभयोर्भेत्तुं शक्यत्वात्।

न च नमस्कारो नित्यं शास्त्रारम्भे शास्त्रकारैरवश्यं क्रियत इति भवताप्यभ्युपेतत्वात्। अनित्यस्तज्जनक इति चेन्न। अनित्यः किं कतिपयक्षणावस्थायी क्षणस्थायी वा। आद्यक्रियारूपत्वान्नमस्कारस्य तथात्वं प्रतिपत्तुमशक्तिः क्रियायाः क्षणप्रध्वंसित्वात्। द्वितीये स्वोत्पत्तिमात्रं व्यग्रस्य क्षणिकस्य तज्जननं प्रत्यप्रभविष्णुतैव। स्वोत्पत्तेः प्राक् पश्चादुत्पत्तिसमसमयएव वा

क्षणिका (क्रिया) कार्यं कुर्य्यादिति विकल्पजालेन प्रत्यवस्थातुं शक्यत्वात्। कथं वा क्षणिको नमस्कारः कालभूयस्त्वभाविनीं शास्त्रसमाप्तिं यावत्तिष्ठेत् तत्प्रत्यूहं व्यपोहेच्च। नापि नित्यानित्यः परस्परपक्षोपक्षिप्तदूषणगणावकीर्णत्वात्। तदुक्तम्।

प्रत्येकं यो भवेद्दोषो द्वयोर्भावे कथं न सः।

इति। नापि व्यञ्जकत्वेन तस्य तद्व्यञ्जकतया त्वयाद्याप्यप्रसाधितत्वात्।

किञ्च नमस्कारात् कस्य प्रत्यूहस्य व्यपोहः। किम्भूतस्य भविष्यतो वर्त्तमानस्य वा। न तावद्भूतभविष्यतोस्तयोरतीतानागतत्वेन व्यपोहितुमशक्यत्वात्। वर्त्तमानस्य किं सतोऽसतो वा। न तावत्सतस्तस्य भोग्यतयोपसेदुषः परःशताभिरपि नमस्याभिर्दुरपोहत्वात्। असतस्त्वसत्त्वादेव तदपोहानुपपत्तेः।

अन्यच्च। यदि नमस्क्रियैव प्रत्यूहव्यपोहिका स्यात्तदा प्रत्यूहदन्दह्यमानो जनो नमस्क्रियाभिस्तं व्यपास्य को न स्वं सुखवित्कुर्य्यात्। तस्माद्विघ्नोपशमार्थं नमस्कार इति यत्किञ्चिदेतत्।

अत्र प्रतिविधीयते। यत्तावदवादि प्रकृतप्रकरणकरणमवगणय्य नमस्कारकरणं किमर्थमित्यादि। तदेतत्सर्वं तवाप्रामाणिकत्वमेव प्रवीणयति। न खलु प्रामाणिकीभूय कश्चिद्विपश्चिच्छास्त्रारम्भसम्भावितं नमस्कारं तिरस्कुर्वीत। शास्त्रारम्भे शास्त्रकारैस्तस्यैव प्रस्तुतत्वात्।

यच्चावाचि किं नमस्कारादेव विघ्नोपशम इत्यादि तदप्य-हृद्यम्। यतो नमस्कारादेव न वयं विघ्नोपशममभिदध्महे। किन्तु तज्जनितनिर्मलधर्मादेव। स चाभीष्टदेवताप्रणिधाना-द्यनेक-सविवेकव्यापारसाध्यः। अतएव यत्र क्वापि विघ्नोपशम-स्तत्रावश्यं मानसप्रणिधानाद्युत्पन्नधर्मस्यैव हेतुत्वम्। कार्य-वैशिष्ट्यगम्यत्वात्कारणवैशिष्ट्यस्य। यत्र तु तत्सद्भावेऽपि विघ्न-सद्भावस्तत्र धर्माधर्मयोरल्पीयस्त्वबलीयस्त्वौ हेतू। बलीयसा चाल्पीयसो धर्षणात्।

एतेन नित्यानित्याद्यनल्पविकल्पजालमपि निरस्तं ज्ञेयम्। यतः क्रियारूपत्वेनानित्योऽपि नमस्कारो धर्मं निर्माय विनश्यति। स चाशेषविघ्नविघातनिघ्नो भवति। तथाच प्रतिपादयाञ्चकार श्रीकन्दलीकारः। स हि धर्मोत्पादकस्तिरयत्यन्तरायबीज-मिति। व्यञ्जकपक्षस्य त्वस्वीकार एव परीहारः।

यदप्याचचक्षे दक्षेण नमस्कारात् कस्य प्रत्यूहस्य व्यपोह इति। तदप्यल्पम्। वर्त्तमानस्यैव तस्य धर्मेण तिरस्करणात्। न च वाच्यं वर्त्तमानस्तिरस्क्रियत इति। उद्दण्डमुद्गरदण्डादिना विद्यमानस्यैव घटादेर्विघटनोपलम्भात्। धर्मस्येदमेव चालङ्कर्मी-णत्वं यदुपेतमपि प्रत्यूहं व्यपोहति। अन्यथा तेन किमुपकृतं स्यात्। वरं ततश्चावश्यं शास्त्रारम्भे देवतानमस्कारोऽन्वेष्टव्यः प्रमाणप्रतिष्ठितत्वात्।

तथाहि विवादाध्यस्तो नमस्कारः शास्त्रारम्भे ऽवश्यं विधेयो विघ्नोपशमफलत्वात् त्रिपुरादिमन्त्रजापवदित्यलं कुचर्चया।

अथाद्यपद्यव्याख्या। सा च पदवाक्यविषया। तदुक्तम्।

शास्त्रप्रकरणादीनां यथार्थावगमः कुतः।
व्याख्यां विहाय तत्त्वज्ञैः सा चोक्ता पदवाक्ययोः॥ इति।

तत्रापि पदकदम्बकात्मकत्वाद्वाक्यस्यादौ पदार्थगमनिका युक्ता। सा च पदविच्छेदपूर्व्विकेत्यतः प्राक् पदविच्छेदः।

प्रणम्य शम्भुं जगतः पतिं परं
समस्ततत्त्वार्थविदं स्वभावतः।
शिशुप्रबोधाय मयाभिधास्यते
प्रमाणतद्भेदतदन्यलक्षणम्॥

एवं पदविच्छेदो ग्रन्थसमाप्तिं यावत् स्वयमेवाभ्यूह्यः।

अधुना पदार्थः। अभिधास्यते वक्ष्यते। अभिधास्यत इत्यस्याः क्रियायाः सकर्मकत्वात् किमपेक्षायां कर्माह। प्रमाणेत्यादि। प्रमीयते परिच्छिद्यते संशयादिव्यवच्छेदेन वस्तुतत्त्वं येन तत्प्रमाणं प्रत्यक्षानुमानागमरूपम्। तद्भेदा योगिप्रत्यक्षादयस्तदन्यत्प्रमे-यादिकम्। प्रमाणञ्च तद्भेदाश्च तदन्यच्च प्रमाणतद्भेदतदन्यानि तेषां लक्षणं स्वपरजातीयव्यावर्त्तको धर्मः। स्वनिश्चयसामर्थ्यात् पदार्थानां परस्परासाङ्कर्य्येण निश्चायको धर्मो वा तत्।

ननु प्रमाणतद्भेदादीनां किमेकं लक्षणमनेकं वा। यद्येकं तर्हि तेषामैक्यापत्तिरेकलक्षणनिष्ठत्वादैक्यस्य। सा च विरुद्धा। प्रमाणतद्भेदादीनामाबालगोपालं भेदेन प्रतीतत्वात्।

अथानेकं तदा लक्षणानां भूयस्त्वाल्लक्षणमित्यत्र बहुवचनं न्याय्यमिति चेत् सत्यम् । किन्तु एकैकस्मादेव लक्षणात् प्रमाणादि परिच्छेत्तव्यमिति प्रतिपत्त्यर्थमेकवचनं चक्रे । अन्यथा बहुत्वे ह्येकैकं बहुभिर्लक्षणैर्लक्ष्यमिति भ्रान्तेर्लक्षणं वान्योन्यलक्षणतो लक्ष्यमित्यनवस्थादोषस्यस्य च सम्भवात् ।

केनाभिधास्यत इत्याह । मया भासर्वज्ञेन । क्रियाबलादेव कर्त्तरि प्राप्ते मयेति पदं कर्त्तुः स्वातन्त्र्यामन्त्रणार्थं स्वातन्त्र्यस्यैव परमतत्त्वामृतोपदेशं प्रति धुर्यत्वात् ।

प्रेक्षावत्प्रवृत्तेः प्रयोजननिष्ठत्वेनात्रापि प्रयोजनं वाच्यमित्याकाङ्क्षायामाह । शिशुप्रबोधायेति । अधीतान्यशास्त्रा अनधीततर्कशास्त्रास्त्विह शिशवो न पुनः स्तनन्धयास्तेषां तर्कं प्रवेष्टुमनधिकृतत्वात् । तेन वर्षीयसा न व्यभिचारः । कदाचित्तस्यापि व्युत्पाद्यत्वात् । तेषां प्रकृष्टो बोधस्तत्त्वज्ञानं तस्मै । प्रबोधेत्यत्र प्रशब्दोपादानेनान्यप्रकरणेभ्यः स्वप्रकरणस्य कर्त्ता वैशिष्ट्यमाचष्टे । बोधमात्रकारित्वात् तेषामस्य तु प्रबोधकारित्वात् ।

सर्वापि क्रिया इष्टदेवतानमस्यापूर्वा भवतीति तामाचष्टे प्रणम्येति । केवलेनापि नमा नमस्याया लब्धत्वादत्र प्रशब्दो भक्तिश्रद्धातिशायितया नमस्यां विशिनष्टि । तमेव विशिनष्ट्यन्य इति वचनात् । तादृश्या एव तस्या धर्मनिर्माणं प्रति हेतुत्वात् ।

कमित्यपेक्षायामाह । शम्भुमिति । शं सुखं भवत्यस्मादिति शम्भुस्तं महेश्वरमित्यर्थः ।

ननु शम्भोरभावान्निराश्रया तन्नमस्येति चेन्न। तार्त्तीयिक-परिच्छेदे शास्त्रकारेणैव तस्य साधयिष्यमाणत्वात्। तथाप्यनु-योक्तव्यस्त्वम्। कुतः सा निराश्रया तदभावादिति चेन्न। अभावेनैव तत्सद्भावविभावनात्। कथमिदमिति चेत्। अभावस्य भावप्रतियोगित्वात् यस्यैव भावस्तस्यैवाभाव इति वचनाच्च।

तथाहि। स प्रमितोऽप्रमितो वा प्रतिषिध्यते। प्रमितश्चेत् तद्ग्राहिणैव प्रमाणेन बाधः। अप्रमितश्चेत्तर्ह्यतिप्रसङ्गः। नह्य-प्रमितो घटादिरपि प्रतिषेद्धुं शक्यः। तदुक्तम्।

लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते।
विधानमन्तरेणातो न निषेधस्य सम्भवः॥

इत्यलं प्रसङ्गेन प्रकृतं प्रस्तुमः॥

ननु जगतः पत्यादीनि पदानि किं स्वरूपपराणि व्यवच्छेद-कानि वा। आद्ये तानि वैयर्थ्यमास्तिघ्नुवीरन्। एकेनापि स्वरूपस्य प्रतिपादितत्वात्। द्वितीये किं व्यवच्छेद्यमत्रोच्यते। शं सुखं भवत्यस्मादिति व्युत्पत्त्या स्रक्चन्दनवनितादिभ्योऽपि जायमानसुखत्वेन तेषां नमस्या स्यात्। न च तन्नमस्या प्रशस्येति तन्निवृत्त्यर्थमाह। पतिमिति। स्वस्वगृहापेक्षया सर्वेषां पतित्वमस्ति। पातीति व्युत्पत्तेस्तद्व्युदासार्थं जगत इति। जगत इत्यत्रैकवचनं जात्या। अन्यथा तेषां बहुत्वादत्र बहुवचनं न्याय्यं स्यात्ततो जगतः स्वामिनमित्यर्थः। जगत्पतित्वं देवेन्द्राणा-मस्तीति तद्व्यवच्छेदाय परमिति। उत्कृष्टमन्याप्रेर्य्यमिति यावत्।

ईश्वरप्रेर्य्यत्वेनेन्द्रादीनामपरत्वात्। आत्मनोऽन्यत्वेन परत्वं सांख्याभिमते प्रकृत्यपरपर्य्याये प्रधानेऽप्यस्तीति तद्व्यावृत्त्यर्थं समस्ततत्त्वार्थविदमिति। यस्य वस्तुनः प्रमाणोपपन्नं यत्स्वरूपं तत्तस्य तत्त्वम्। तेन विशिष्टा अर्थास्तत्त्वार्थाः समस्ताश्च ते तत्त्वार्थाश्च समस्ततत्त्वार्थास्तान् वेत्ति समस्ततत्त्वार्थवित् तं सर्वज्ञमित्यर्थः। समस्ततत्त्वार्थवित्त्वं योगिष्वप्यस्तीति तदपनुत्त्यै प्राह। स्वभावत इति। योगिनो ह्यष्टाङ्गयोगैश्वर्य्यजनितज्ञानेन समस्ततत्त्वार्थविदः स्वरसौ भगवांस्तु योगादिक्लेशं विनैव नित्यज्ञानवानिति तात्पर्य्यम्॥

इह प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति। श्रीअक्षपादप्रतिपादितमूलसूत्रापेक्षया विपर्यस्ता अप्येतएव प्रमाणादयः षोड़शपदार्थाः प्रमाणतद्भेदतदन्यलक्षणमिति पदेनाभिधेयतयोक्ताः। अभिधेयश्च द्विधा प्रधानाप्रधानभेदात्। तत्र प्रधानं प्रमाणादयः पदार्थाः। अप्रधानं तल्लक्षणम्। न च वाच्यं तत्पुरुषस्योत्तरपदप्राधान्याल्लक्षणमेव प्रधानं प्राप्नोति। छात्रशतं भोजितमित्यादौ पूर्वपदप्राधान्यस्यापि दृष्टत्वात्। सम्बन्धः पुनः सामर्थ्यगम्यः स च कार्य्यकारणलक्षणः। तत्र कार्य्यं प्रकरणार्थपरिज्ञानम्। कारणं वचनरूपापन्नं प्रकरणम्। तथा शिशुप्रबोधायेति पदेन प्रयोजनमुपन्यस्तम्। तच्चानन्तरपरम्परभेदात् द्वेधा। तत्र श्रोतुरनन्तरं प्रकरणार्थपरिज्ञानम्। परम्परं तु तत्त्वज्ञानान्निःश्रेयसावाप्तिः। परम्परप्रयोजनं सूत्रे कस्मान्नोक्तमिति चेन्न। प्रबोधाख्यप्रयोजनाभिधानादेव तस्य

लब्धत्वात्तदर्थत्वात् प्रबोधस्य। ततश्च जगत्सत्याद्यसाधारणगुण-विशिष्टं महेश्वरं प्रणम्य शिशुप्रबोधनिमित्तं मया भासर्वज्ञेन प्रमाणतद्भेदतदन्यलक्षणं वक्ष्यत इति वाक्यार्थः ॥ १ ॥

इह न्यायशास्त्रे चतुर्धा प्रवृत्तिरुद्देशो लक्षणं परीक्षा विभागश्चेति। तत्र नाम्ना पदार्थानां सङ्क्षेपेणाभिधानमुद्देशः। उद्दिष्टस्य स्वपरजातीयव्यावर्त्तको धर्मो लक्षणम्। लक्षितस्य यथालक्षणं विचारः परीक्षा। उद्दिष्टस्यैवावान्तरभेदप्रकटनं विभागः। तत्र प्रमाणतद्भेदेत्यादिपदेनोद्दिष्टस्य प्रमाणस्यैव यथोद्देशं निर्देश इति न्यायात् प्राक् लक्षणमाह।

सम्यगनुभवसाधनं प्रमाणमिति।

अत्र प्रमाणमिति लक्ष्यं शेषं तु लक्षणं भवति। किं प्रमाणम्। प्रागुक्तशब्दार्थः। किं तत्। सम्यगनुभवसाधनम्। सम्यगव्यभिचारी योऽसावनुभवो वस्तुपरिच्छेदः प्रात्यक्षिकानुमानिकशाब्दरूपः। तस्य साधनं करणमिन्द्रियलिङ्गशब्दरूपमिति।

सम्यगित्यादिपदानि स्वयमेव व्यवच्छेत्स्यत्याचार्य्यस्तथापि किञ्चिदुच्यते। प्रमाणमित्युक्ते किं प्रमाणमिति साकांक्षं वचो व्यर्थं स्याल्लक्ष्यलक्षणानुपपत्तिश्च। तद्व्यवच्छित्तये साधनमिति पदम्। तथापि छिद्यादिक्रियासाधनत्वेन दात्रादावतिव्याप्तिस्तन्निवृत्तये अनुभवेति पदम्। एवमपि प्रमाणाभासेऽतिप्रसक्तिस्तदपनुत्त्यै सम्यगिति पदम्। ततः संशयादिरहितस्यार्थपरिच्छेदस्य यत्साधनं करणं तत्प्रमाणं भवतीत्यर्थः। अनेन

लक्षणेन स्वरूपेण सिद्धस्यापि प्रमाणस्य समानासमानजातीय-प्रमाणाभासप्रमेयादिभ्यो व्यावृत्तिर्व्यवहारादिश्च साध्यते। अन्यथा सिद्धे साधनवैयर्थ्यात्। तथाहि। प्रमाणमितरेभ्यो व्यवच्छिद्यते। प्रमाणत्वाभिसम्बन्धात्। यन्नेतरेभ्यो व्यवच्छिद्यते तन्न प्रमाणत्वाभिसम्बद्धम्। यथा संशयादि। न च तथा नेदं तस्मादितरेभ्यो व्यवच्छिद्यत इति। यद्वा विमतं प्रमाणमिति व्यवहर्त्तव्यं प्रमाणत्वाभिसम्बन्धात्। न यदेवं न तदेवं यथा संशयादि। न च तथा नेदं तस्मात्प्रमाणमिति व्यवहर्त्तव्यमेव। यो वा प्रमाणमिति शृणोति लोके न जानाति च तस्य स्वरूपं कीदृगिति तं प्रति स्वपरजातीयव्यवच्छेदः क्रियत इति।

ननु प्रमेयाणां स्वरूपज्ञानं प्रमाणाधीनम्। प्रमाणस्य तु स्वरूपज्ञानं किं तस्मात्परस्माद्वा। तस्माच्चेन्न। असम्भवात्। न हि सुतीक्ष्णापि कृपाणी स्वयं स्वं छिन्दीत स्वाश्रयापत्तेश्च। परस्माच्चेत् किं प्रमाणादप्रमाणाद्वा। प्रमाणाच्चेत्तस्यापि स्वरूपपरिच्छित्तिस्तस्मात्परस्माद्वा। तस्माच्चेत् स एव प्रागुक्तो दोषः। परस्मादपि प्रमाणादप्रमाणाद्वा। प्रमाणाच्चेत्तस्यापि ज्ञानम्। तस्मात्परस्माद्वेत्यनल्पविकल्पावर्त्ते गर्त्ते निपातः। अप्रमाणात्संशयादेर्वा लक्षणाद्वा। आद्ये कल्पे विरोधो न खल्वज्ञानरूपात्संशयादेर्ज्ञानरूपप्रमाणपरिच्छित्तिः स्यात्। द्वितीये ज्ञातादज्ञाताद्वा। ज्ञाताच्चेत् ज्ञातत्वं तस्मादेव लक्षणान्तराद्वा। आद्ये स्वाश्रयः। द्वितीये लक्षणान्तरस्यापि ज्ञातत्वं लक्षणान्तराद्वाच्यम्। तस्यापि

लक्षणान्तरादित्यनवस्थास्वरूपदौस्थ्यम्। अज्ञाताचेत्तर्ह्यतिप्रसक्तिरज्ञातः कथमवगमक इति।

अत्रोच्यते। न वयं प्रमाणस्वरूपपरिज्ञानं तस्मादेव प्रमाणाप्रमाणान्तराद्वा ब्रूमो येन त्वदुक्तः स्वाश्रयादिदोषोपनिपातः स्यात्। किन्तु लक्षणादेव। न च वाच्यं लक्षणस्यापि लक्षणान्तरान्निर्णयेऽनवस्थेति। अप्रतीतौ लक्षणापेक्षणात्। न च विश्वत्राप्यप्रतीतिः। तथाह्यप्रतीताग्निः पुमान् धूमादग्निं ज्ञाप्यते। न च स धूममप्यन्यस्माद्धेतोः प्रतीषिषति। यस्तु धूममात्रेऽव्युत्पन्नो न तं प्रत्युपदेशस्तस्य बालमूकवदनधिकारात्। ततो लक्षणात् प्रमाणस्वरूपप्रतीतिर्भवत्येव। तथाच प्रयोगः विवादास्पदं प्रमाणं सम्यगनुभवसाधनत्वात्। यत् प्रमाणं न भवति तत् सम्यगनुभवसाधनं न भवति। यथा संशयादि। सम्यगनुभवसाधनं चेदम्। तस्मात् प्रमाणमेवेति। अत्रासिद्धतादिदूषणोद्धारः स्वयमभ्यूह्यः। तस्मात् स्वव्यक्त्यव्याप्तया परव्यक्तिव्याप्तयाऽसम्भवितया च अव्यापकत्वमतिव्यापकत्वमसम्भवित्वञ्च लक्षणदोषाः। तत्र यल्लक्षणं न व्याप्नोति तदव्यापकम्। यथा वेदवित् ब्राह्मणः। इत्यत्र माणवके व्यभिचारः। यच्च लक्ष्यादतिरिक्ते वर्त्तते तदतिव्यापकं यथोपवीतभृत् द्विजः। अत्र क्षत्रियादावतिव्याप्तिः। यन्न सम्भवत्येतदसम्भवि। यथा सुरापो द्विजोऽत्र सुरापायित्वमसम्भवि। एतद्दोषत्रयाभावे सुस्थं लक्षणम्। तथाच सम्यगनुभवसाधनं प्रमाणमिति सुस्थं लक्षणम्।

नन्वीश्वरज्ञाने अव्यापकमिदं लक्षणं तस्यानुभवरूपत्वात्।

अस्य सम्यगनुभवसाधनरूपत्वादिति चेन्न। लौकिकप्रमाणोद्देशेनास्य प्रवृत्तत्वात्तद्व्यापकत्वे सतीश्वरज्ञानाव्यापकत्वेऽपि न दोषः। कथमेतदिति चेत्। पुरो लौकिकानामेव संशयादीनां प्रस्तूयमानत्वात्।

ननु प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति प्रमाणविशेषलक्षणेनैव प्रवृत्तैर्मूलसूत्रैः सहास्य प्रकरणस्य विरोधः प्रमाणसामान्यलक्षणस्याप्यत्र प्रस्तुतत्वात्। न। प्रकरणत्वादेवास्य विरोधाभावात्। प्रकरणं हि मूलसूत्रातिरिक्तार्थमपि भवति। तदुक्तम्।

> शास्त्रैकदेशसम्बद्धं शास्त्रकार्य्यान्तरस्थितम्।
> आहुः प्रकरणं नाम शास्त्रभेदं विपश्चितः।

यद्वा सामान्यलक्षणं विना विशेषलक्षणस्य वक्तुमशक्यत्वात् अत्र प्रमाणसामान्यलक्षणप्रणयनम्। सामान्यं विना विशेषाणां खरविषाणायमानत्वात्। तदप्युक्तम्।

> सामान्यलक्षणञ्चोक्ता विशेषस्यैव लक्षणम्।
> न शक्यं केवलं वक्तुमतोऽप्यस्य न वाच्यता॥ इति॥ २॥

अथ स्वप्रणीते प्रमाणलक्षणे सम्यगिति पदं व्यवच्छेत्तुमाह।

सम्यग्ग्रहणं संशयविपर्य्ययापोहार्थमिति।

संशयविपर्य्ययौ वक्ष्यमाणस्वरूपौ। तयोः प्रमाणफलत्वेन निराकरणमपोहस्तदर्थम्। यद्वा संशयविपर्य्ययाभ्यां सकाशादपोहो व्यावृत्तिरनुभवस्य तदर्थमित्यर्थः।

ततस्तत्साधनानामपि प्रमाणत्वं व्यवच्छिन्नं भवति। फलस्य हि सम्यक्त्वासम्यक्त्वाभ्यां प्रमाणतदाभासयोः सम्यक्त्वासम्यक्त्वे निर्णीयेते। तेन सम्यगित्येतत्पदं फलविशेषणत्वेन व्याख्येयम्। सम्यक् चासावनुभवश्चेति।

ननु किमिदं सम्यक्त्वं नाम येन तदपोहः। स्वस्वरूपावस्थायित्वमिति चेन्न। संशयविपर्य्ययोरपि स्वस्वरूपनिष्ठतया प्रमाणत्वापत्तेः। अविसंवादकत्वमिति चेन्न। यथोक्तस्वस्वविषयज्ञापनेन तयोरप्यविसंवादकत्वाभ्युपगमात्। अन्यथा तत्स्वरूपमेव न स्यात्। ज्ञानान्तरेणाबाध्यमानविषयत्वमिति चेत्। तत् किं तस्मिन्नेव क्षणे क्षणान्तरे वा। नाद्यः पक्षः अनुभवक्षणे संशयविपर्य्ययोरपि तथाभावात्। न द्वितीयः सत्यज्ञानस्यापि ज्ञानान्तरेण बाध्यमानत्वात्। तत्कथमेतादृशेन सम्यक्त्वेन तदपोहः स्यात्। अत्रोच्यते।

विशिष्टवस्तुस्वरूपपरिच्छेदकत्वं सम्यक्त्वम्।

तेन च संशयस्य निर्विशिष्टविषयतया विपर्य्ययस्य च मिथ्यारूपविषयतया व्यपोहः सिद्धः।

भूषणकारस्तु तथाभूतार्थनिश्चयस्वभावत्वं सम्यक्त्वम्, तद्विपरीतानुभवस्वभावत्वमसम्यक्त्वमिति सम्यक्त्वासम्यक्त्वस्वरूपमाह।

एतेनैतदपि प्रत्युक्तम्। यदुक्तं केनचित्, स्थाणुत्वपुंस्त्वयोः शुक्तिकाशकलकलधौतयोश्च स्वस्वक्षणे सत्यत्वात् क्वचिद्वर्त्तमानत्वाच्च संशयविपर्य्ययज्ञानयोः सत्यतेति।

तथाहि। तद् ज्ञानं किं निश्चितं अनिश्चितं वा। आद्ये कथं ज्ञानान्तरेण बाधः। द्वितीये कथं सत्यता स्यादनिश्चितत्वादिति ॥ ३ ॥

अज्ञातस्वरूपयोः संशयविपर्य्ययोरपोहितुमशक्यत्वादादौ संशयं लक्षयति।

तत्रानवधारणज्ञानं संशयः ॥

अत्र तत्र शब्दो निर्द्धारणार्थः। तत्र तयोः संशयविपर्य्ययोर्मध्ये। संशयस्तावन्निर्द्धार्य्यते। निर्द्धारणं च जातिगुणक्रियानिमित्तमित्यत्र संशयस्य जीवगुणत्वाद् गुणनिमित्तं निर्द्धारणं विज्ञेयम्। संशेरते मुह्यन्तीन्द्रियाण्यस्मिन्निति संशयः।

न विद्यतेऽवधारणा यस्य तदनवधारणं तच्च तद् ज्ञानञ्चानवधारणज्ञानमनिश्चितज्ञानमित्यर्थः। संशय इत्युक्ते किमपेक्षा स्यात्तन्निवृत्त्यै, ज्ञानमिति पदम्।

तथापि घटोऽयमिति सत्यज्ञानेऽप्यतिव्याप्तिस्तत्परिहृत्यै अनवधारणमिति। अनवधारणमित्युक्ते विशेषणं विशेष्यापेक्षमिति ज्ञानपदम्। न चैतद्वाच्यम्। अनवधारणं च तत् ज्ञानं चेति। मिथो व्याघातान्न युक्तमिति। गोशब्दादिवद् ज्ञानशब्दस्य जातिनिमित्तत्वात्। सा च ज्ञानत्वजातिर्निश्चयानिश्चयस्वभावासु व्यक्तिषु वर्त्तत इति न मिथो व्याघातः। तस्मादनिश्चितज्ञानं संशयो भवतीति तात्पर्य्यम् ॥ ४ ॥

अथ लक्षितस्य संशयस्यावान्तरितभेदमाह।

स च समानधर्मानेकधर्म्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिकारण-भेदात् पञ्चधा भिद्यते ॥

तच्छब्दस्य प्राकरणिकार्थपरामर्शित्वात् स पूर्वोक्तः संशयः पञ्चधा भिद्यत इति संबन्धः। कस्मादित्याह। समानधर्मेत्यादि समानश्चासौ धर्म्मश्चेति कर्म्मधारये समानः परिमाणादिरूपो धर्म्मः प्रत्याश्रयं भिन्नो लभ्यते। समानस्य धर्म्म इति षष्ठीतत्पुरुषे तु प्रत्याश्रयमभिन्नोऽपि धर्म्मः सामान्यावयविसंयोगादिरूपो लभ्यते। अनेकस्मात् सजातीयविजातीयाद्व्यावर्त्तको धर्म्मोऽनेक-स्यासंबन्धी वा अनेकस्मिन् प्रतिषिद्धो वा अनेकप्रत्ययहेतुर्वा भेदसाधकत्वेनेत्यतोऽनेकधर्म्म इति। सर्वत्र मध्यपदलोपिसमासात् सर्वथाप्यसाधारणो धर्म्म इत्यर्थः। व्याहतः प्रवादो विप्रतिपत्तिः। प्राप्तिरुपलब्धिरप्राप्तिरनुपलब्धिः। पश्चाद्द्वन्द्वस्ता एव यान्यसाधा-रणानि कारणानि ऊर्द्ध्वत्वादीनि तेषां भेदः पार्थक्यं तस्मात्।

कोऽर्थः। समानधर्मादिरूपात् कारणपञ्चकात् संशयः पञ्च-विधो भवति। ततो विशेषापेक्षसामग्र्यन्तःपतितात् समानधर्माद-साधारणकारणाद्यदनवधारणं ज्ञानं स्फुरति तदनेकधर्म्माद्युप-लक्षितसामग्रीजनितेभ्यः संशयेभ्योऽर्थान्तरं भवतीत्येवमन्येष्वपि संशयेषु वाच्यम्।

यद्यपि सूत्रकारवार्त्तिककारमते समानानेकधर्मोपपत्ते-र्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातोऽविशेषापेक्षो विमर्शः संशय इति वचनात् संशयस्त्रेधा। तथाप्यसौ भाष्यकारमतेन संशयस्य पाञ्चविध्यमभिहितवान्।

ननु संशयएव नास्ति। कुतः तत्पाञ्चविध्यचिन्ता। यतः संशयज्ञाने किं धर्म्मी धर्मो वा प्रतिभाति। यदि धर्म्मी स किं तात्त्विकोऽतात्त्विको वा। यदि तात्त्विकः कथं तर्हि तद्बुद्धेः संशयत्वं तात्त्विकार्थग्रहणात्। अथातात्त्विकः तर्ह्यतात्त्विकार्थ-विषयत्वाद्भ्रान्तिरेव न संशयः।

अथ धर्म्मः किं स्थाणुत्वरूपः पुंस्त्वरूप उभयरूपो वा। पक्षत्रयेऽपि तात्त्विकत्वातात्त्विकत्वविकल्पाभ्यां प्राग्वद्दोषः। अथैकं तात्त्विकमन्यदतात्त्विकं तर्हि ज्ञानं तदेकमेवाभ्रान्तं भ्रान्तं च स्यात्। मैवं संशयः खलु सर्वेषामनवधारणप्रत्ययात्मकत्वेन स्वात्म-संवेद्यः। स धर्मिविषयो धर्मविषयो वा नोच्छेत्तुं शक्यः प्रमाण-सिद्धत्वादिति।

ननु लक्षणभेदाल्लक्ष्यभेदस्तत्कथमत्र लक्षणस्यैक्यात् संशयस्य पाञ्चविध्यं संगच्छते। मैवमुभयथा भेदो वस्तूनां लक्षणभेदात् कारणभेदाच्च। तदुक्तम्।

अयमेव हि भेदो भेदहेतुर्यद्विरुद्धधर्म्माध्यासः कारणभेद-श्चेति ॥ ५ ॥

क्रमेणोदाहरति।

तद्यथा समानधर्म्मात् किमयं स्थाणुः स्यात्पुरुषो वेति ॥

दिग्विशेषावस्थिते दीर्घद्रव्ये ऊर्द्ध्वप्रत्ययनिमित्तमूर्द्ध्वत्वम्। तच्च परिमाणं वा सामान्यं वा। तस्मात् कारणभूतात् स्थाणुपुरुषयोः समानात् धर्म्मादयं पुरःस्थितो भावः किं स्थाणुरुत पुरुषो वा स्यादित्युभयविमर्शात्मकः संशयः प्रादुर्भवति। अयं भावः।

ग्राम्याः ग्रामसीमापरिज्ञानार्थं सुधाधवलितमूर्द्धस्थापितस्थालीकम् स्थाणुमारोपयन्ति। तच्च पान्थो विभातप्रायायां क्षपायां दृष्ट्वा द्वयोस्तुल्यादूर्द्धाकारविलोकनात् किमयं स्थाणुः स्यादुत पुरुषो वेति संशयीत। वक्रत्वकोटरत्वादीनां करचरणादीनां च विशेषणानामनीक्षणात्।

न च वाच्यं समानधर्म्मस्य संशयजनकत्वे तन्मूलत्वात् प्रत्यभिज्ञोपमानयोरपि संशयत्वापत्तिरिति। तयोः समानधर्म्मस्यैकत्र निश्चितत्वादनयोस्त्वनिश्चितत्वात्। अयं च प्रत्यक्षविषयत्वात् प्रात्यक्षिकः संशय इति ॥ ६ ॥

द्वितीयं संशयभेदं निदर्शयति।

अनेकधर्म्मादाकाशविशेषगुणत्वात् किमयं शब्दो नित्यः स्यादनित्यो वेति ॥

अत्र शब्दं प्रति वादिनां नित्यानित्यतया द्वे विप्रतिपत्ती। तत्र शब्दे स्वेप्सितधर्म्मसाधनाय यदि कश्चिदाकाशविशेषगुणत्वं हेतुत्वेन प्रयुञ्जीत तदा पारिषद्याः संशयीरन्।

ननु नित्येभ्यो व्यावृत्तस्वरूपोऽनित्यो दृष्टोऽनित्येभ्यस्तु व्यावृत्तस्वरूपो नित्यो दृष्टः।

शब्दस्तु नित्यानित्यव्यावृत्तेनाकाशविशेषगुणत्वेन युक्तः तत् किं नित्येभ्यो व्यावृत्तत्वात् घटादिवदनित्यः स्यादुतानित्येभ्यो व्यावृत्तत्वादात्मादिवन्नित्य इति। न च नित्यत्वानित्यत्वे एकत्र स्तो मिथो विरुद्धत्वात्।

यद्वा अनेकश्चासौ धर्म्मश्चेति कर्म्मधारये एकत्र विरुद्धार्थ-

द्वयाविनाभूतादपि धर्म्मात् संशयः स्यात्। यथा किं क्रियावत्त्वाच्छरवन्मूर्त्तं मनः स्यादुतास्पर्शवत्त्वादाकाशवदमूर्त्तमिति।

नन्वसाधारणधर्म्मस्य स्वधर्म्मिणां विशेषरूपत्वाद्विशेषदर्शनस्य च प्रत्युत संशयनाशकत्वात् कथं संशयजनकत्वमिति चेत्। सर्व्वव्यावृत्तत्वाद्व्यतिरेकमुखेनेति ब्रूमः। तदुक्तम् भट्टाचार्य्यैः।

यस्त्वसाधारणो धर्म्मस्तदभावमुखेन तु।
द्वयोः सत्त्वविरोधाच्च स नः संशयकारणमिति॥

ननु शब्दस्याकाशविशेषगुणत्वं कुत इति चेत्। अनुमानादिति ब्रूमः। शब्दो गुणः सामान्यवत्त्वास्पर्शवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वाद्रूपादिवदिति। एतेन गुणत्वे सिद्धे गुणस्य च साश्रयत्वे पृथिव्यादिषु निषिध्यमानत्वेन पारिशेष्यादाकाशमाश्रयः।

तथाहि। शब्दः स्पर्शवतां गुणो न भवत्ययावद्द्रव्यभावित्वादिच्छादिवत्। नात्ममनसोर्गुणः शब्दोऽस्मदादिबाह्येन्द्रियग्राह्यत्वात् रूपादिवत्। नापि दिक्कालयोर्गुणः शब्दो विशेषगुणत्वाद्रूपादिवत्। अतः पृथिव्याद्यष्टद्रव्यव्यतिरिक्ताश्रयाश्रितः शब्दस्तद्वृत्तिबाधकप्रमाणवत्त्वे सति गुणत्वात्। यस्त्वेवं न भवति नासौ तथा यथा रूपादि। न च तथा न शब्दस्तस्मात्तद्व्यतिरिक्ताश्रयाश्रित इति। यदाश्रितश्चायं तदाकाशमेव।

अयञ्च संशयोऽनुमानानन्तरोत्पदिष्णुत्वादानुमानिक इति॥७॥

तृतीयं संशयभेदमुदाहरति।

विप्रतिपत्तेरेके भौतिकानीन्द्रियाण्याहुरन्येत्वभौतिकानीति॥

इन्द्रियाणां भौतिकत्वाभौतिकत्वभेदेन द्वैविध्यम् । तत्र एके इति न्यायवादिनः संगिरन्ति ।

इन्द्रियाणि भौतिकानि पृथिव्यादिपञ्चभूतेभ्यो घ्राणाद्यनुक्रमेण जातानीति । कथमेषां भौतिकत्वमिति चेत् । उच्यते इन्द्रियाणि भौतिकानि करणत्वाद्दात्रादिवदिति । यद्वेन्द्रियाणि भौतिकानि भूतगुणप्रकाशकत्वात्प्रदीपवत् ।

किञ्च एकाहङ्कारप्रकृतित्वेऽलेकं वा सर्वार्थमिन्द्रियं सर्वाणि वा सर्वार्थानि स्युः । विषयनियमादप्येषां प्रकृतिनियमोऽनुमीयते । पञ्चत्वमपि तत्पञ्चत्वात् । इत्यमिन्द्रियाणां भौतिकत्वे साधिते अन्ये इति सांख्याः समाख्यान्ति । इन्द्रियाण्याहङ्कारिकाणि तत्सत्त्वञ्च रूपादिज्ञानकार्य्यान्यथानुपपत्तिगम्यम् । ततश्चेन्द्रियाण्याहङ्कारिकाणि । मदर्था एवामी इत्यभिमानेन विषयपरिच्छेत्तृत्वात् । व्यतिरेके दात्रादिवदिति । तदुक्तं तत्त्वकौमुद्याम् ।

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोड़शकः ।
तस्मादपि षोड़शकात् पञ्चभ्यः पञ्चभूतानि ॥
अभिमानोऽहङ्कारस्तस्माद्द्विविधः प्रवर्त्तते सर्गः ।
एकादशकश्च गणस्तन्मात्रः पञ्चकश्चैव ॥

अनयोरुभयोर्य्यर्थलेशः । मदर्था एवामी विषयाः मत्तो नान्योऽधिकृतोऽत्र कश्चिदहो अहमस्मीत्यभिमानरूपादहङ्काराद्द्विधा सर्गः स्यादेक इन्द्रियाख्य एकादशको गणः पञ्चकस्तन्मात्रश्च । सत्त्वाधिकाहङ्कारोपादानत्वमिन्द्रियत्वम् । तद्द्विधा बुद्धिकर्म्मभेदात् । तत्र घ्राणादीनि पञ्च बुद्धीन्द्रियाणि वागादीनि पञ्च कर्मेन्द्रियाणि

एकादशं मन इति । एवं सांख्येनेन्द्रियाणामाहङ्कारिकत्वे समर्थिते सभ्याः सन्दिहीरन् । स्वस्वागमसमर्थाया मिथो विरुद्धायाः प्रतिपत्तेरिन्द्रियाणि किं भौतिकानि स्युरभौतिकानि वा । एकत्र विरुद्धधर्मद्वयाघटनात् । एकस्यापि स्वरूपस्यानिश्चितत्वात् । अयञ्चागममूलत्वादागमिकः संशय इति ॥ ८ ॥

चतुर्थं संशयभेदं समर्थयति ।

उपलब्धेः किं सदुदकमुपलभ्यते उतासदिति ॥

विधिमुखेन ज्ञानप्रवृत्तिरुपलब्धिस्तस्या एवं संशयः । क्वापि कूपखननानन्तरं जलोपलब्धौ तदुपलब्धा संशेते तटाकादौ जलं सदुपलब्धं मरुमरीचिकाचक्रे चासत् । इदानीमत्र जलं यदुपलब्धं तत् किं सदसद्वेति ।

ननु सतएवोपलम्भादयं संशय एव न भवतीति चेन्न । मरुमरीचिकाचक्रादावसतोऽप्युपलम्भात् । भ्रान्तस्तदुपलम्भ इति चेन्न । उपलम्भक्षणे भ्रान्ताभ्रान्तत्वव्यवस्थादौस्थ्यात् । उत्तरक्षणे तद्बाध इति चेन्न । इदमन्यसंशयेऽपि सममिति ॥ ९ ॥

संशयस्य पञ्चमं भेदं प्रपञ्चयति ।

*अनुपलब्धेः किमविद्यमानः पिशाचो नोपलभ्यते । किं वा विद्यमान इति ॥

प्रतिषेधमुखेन प्रवृत्तं ज्ञानम् । ज्ञानानुत्पादश्चानुपलब्धिः ।

---

* The reading adopted by the commentator here differs somewhat from our text [ Vide p. 2. line 3. ]

तस्या इत्थं संशयः । श्मशाने पिशाचोऽस्तीति कश्चित् प्रसिद्धि-माकलय्य तत्र गत्वा तमदृष्ट्वा सन्दिग्धे ।

ननु घटादिकं क्वाप्यसन्नोपलभ्यते । निध्यादिकं क्वापि सदपिच नोपलभ्यते । तदत्र पिशाचो यन्नोपलभ्यते तत् किं विद्यमानोऽविद्य-मानो वेति । नचोपलब्धिमात्रमनुपलब्धिमात्रं वा संशयहेतुर्ये-नातिप्रसङ्गः । किंतूपलब्ध्यनुपलब्ध्यव्यवस्थासहितं विशेषापेक्षञ्च । अतएव मूलसूत्रे तयोरेवं लक्षणं कृतम् । उपलब्ध्युपपत्तेरुपलब्ध्य-नुपलब्ध्यव्यवस्थातोऽविशेषापेक्षो विमर्शः संशयोऽनुपलब्ध्युपपत्ते-रुपलब्ध्यनुपलब्ध्यव्यवस्थातोऽविशेषापेक्षो विमर्शः संशय इति ।

ननूपलब्धित्वमनुपलब्धित्वञ्च सामान्यं ततः समानधर्मान्ना-नयोर्भेद इति चेन्न । समानधर्मस्य ज्ञेयस्थत्वादनयोश्च ज्ञातृस्थत्वा-न्महान् भेदः ।

भूषणकारस्तु ये उपलब्धिमात्रेण शब्दे स्थायित्वमनुपलब्धि-मात्रेण स्वर्गेश्वरादीनामसत्त्वञ्चेच्छन्ति । तन्मतप्रतिक्षेपार्थमुप-लब्ध्यनुपलब्ध्योः पृथक् संशयहेतुत्वमित्यूचिवान् । संशयस्य त्वतत्त्वरूपस्यापि यत् षोड़शपदार्थां तत्त्वतया भणनं तद्विचाराङ्ग-त्वेन संशय्य तत्त्वनिर्णयार्थं प्रवर्त्तनात् ॥ १० ॥

ननूहानध्यवसायावप्यप्रमाणस्वरूपत्वादस्माल्लक्षणात् व्यवच्छे-त्तव्यौ तौ च कथं व्यवच्छेत्स्येते । तन्निषिद्धपदानुपादानादित्या-शङ्काह ।

अनवधारणत्वाविशेषादूहानध्यवसाययोर्न संशयादर्थान्तरभाव इति ॥

अत्र संशयादर्थान्तरभावः पार्थक्यं न भवतीत्यन्वयः ।

कयोरित्याह । ऊहानध्यवसाययोरिति । ऊहानध्यवसायौ वक्ष्यमाणस्वरूपौ तयोः । कस्मादित्याह । अनवधारणेत्यादि । अनवधारणत्वं नामानिश्चितज्ञानत्वं तेनाविशेषस्तौल्यं तस्मात् । अयमर्थः । ऊहानध्यवसायावनवधारणरूपैकलक्षणाक्रान्तत्वात् संशयान्न भिद्येयातामैक्यस्यैकलक्षणत्वान्न खलु वैधर्म्यमात्रात्पार्थक्यं युक्तं मृद्देलक्षण्यात् पाषाणस्यापि पृथ्वीतोऽर्थान्तरभावापत्तेः । तथाच प्रयोगः ऊहानध्यवसायौ संशयान्न पृथग् अनवधारणरूपैकलक्षणाक्रान्तत्वात् । न यावेवं न तावेवं यथा विपर्यय इति ॥ ११ ॥

तयोः स्वरूपमाह ।

*वाह्यालीप्रदेशे पुरुषेणानेन भवितव्यमित्यूहः इति ॥

यत्र वाहा वाह्यन्ते तत् चेत्रं वाह्यालीत्युच्यते । तत्र तु प्रायेण स्थाण्वादेरसम्भवात् कमप्यूर्द्धं दविष्ठं दृष्ट्वा द्रष्टेत्यूहते मन्येऽहमत्रानेन केनापि ऊर्द्धंदमेन पुरुषेण भवितव्यम् । अस्यैवं रूपत्वात् संशयत्वमेव ।

ननु मूलसूत्रे ऊहस्य पृथगुक्तौ किं प्रयोजनमिति चेत् । प्रमाणानुग्राहकत्वमिति ब्रूमः । तर्कविविक्ते विषये प्रवर्त्तमानानि प्रमाणानि तर्केणानुगृह्यन्त इति पूर्व्वाचार्य्यवचनात् । भूषणकारस्तु वादादिप्रवृत्तिविशेषणार्थं तर्कः पृथगुपदिष्ट इत्याचष्टेति ॥ १२ ॥

---

* In our text is added "तद्यथा" before the reading adopted here. [ Vide p. 2. L. 6. ]

अनध्यवसायस्वरूपं निरूपयति ।

किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसाय इति ॥

न विद्यतेऽध्यवसायो निश्चयो यस्मिन् । असावनध्यवसायः । कश्चित् कमपि वृक्षं पुरः प्रेक्ष्य लक्षितवृक्षत्वोऽपि तत्संज्ञामनध्यवस्यन् विमृशति कोऽस्य वृक्षस्य संज्ञेति । अयं भावः । वृक्षसंज्ञाविषयो हि योऽर्थः सोऽपरसंज्ञाविषयोऽपि दृष्टो यथाम्रादिरित्येवं सामान्येन विशेषसंज्ञामनुमाय तद्वेदमाम्रादिवदनुस्मरन् सन्दिग्धे किंसंज्ञोऽयं वृक्ष इति ॥ १३ ॥

पूर्वं सम्यग्ग्रहणं संशयविपर्य्ययापोहार्थमित्युक्तम् । तत्र संशयं व्यवच्छिद्य विपर्य्ययं व्यवच्छेत्तुं लक्षयति ।

मिथ्याध्यवसायो विपर्य्यय इति ॥

विपरियन्तीन्द्रियाण्यस्मिन्निति विपर्य्ययः ।

मिथ्येत्यादि । मिथ्या अतस्मिंस्तदितिरूपोऽध्यवसायो निश्चयो मिथ्याध्यवसायः । विपर्य्यय इति लक्षणे कृते किमपेक्षानिश्चयो ... स्यात्तन्निवृत्त्यर्थमध्यवसाय इति । अध्यवसायः सम्यक् ज्ञानेऽप्यस्तीति तद्व्युदासार्थं मिथ्येति । मिथ्याविपर्य्यय इति कृते अतत्त्वे तत्त्वं मिथ्यात्वं तच्च संशयेऽप्यस्तीति तन्निरासार्थमध्यवसाय इति । विपरीतज्ञानं विपर्य्यय इत्यर्थः ॥ १४ ॥

विपर्य्ययो द्विधानुभूयमानारोपः स्मर्य्यमाणारोपश्च । तत्रादावनुभूयमानारोपमुदाहरति ।

तद्यथा । द्वौ चन्द्राविति ॥

अत्र पूर्वक्षणे एकत्वेनानुभूय तर्ज्जन्या कनीनिकानिष्पीड़-

नात्तिमिरातिशयाद्वा द्वौ चन्द्रावनुभूयेते। तदपसारणे पुनरेक-एव। ततः प्राक्तनेन पाश्चात्येन च चन्द्रैक्यग्राहिणा ज्ञानेन चन्द्रद्वित्वज्ञानस्य बाध्यमानत्वाद्विपर्य्यस्तत्वं स्यादिति ॥ १५ ॥

स्मर्य्यमाणारोपमाह।

सुप्तस्य गजादिदर्शनं चेतीति ॥

अत्र वादिनां विवेकख्यात्यख्यात्यसत्ख्यातिप्रसिद्धार्थख्यात्या-त्मख्यातिसदसत्त्वाद्यनिर्वचनीयार्थख्यात्यलौकिकार्थख्यातिविपरीत-ख्यातिरूपा अष्टौ विप्रतिपत्तयः सन्ति। तासु सप्त व्यपासितुं स्वमते विपरीतार्थख्यातिं ख्यापयितुं इदमुदाहरणम्। भूषण-कारस्तु ये स्वप्नज्ञानं प्रमाणफलस्मृतिसंशयादिभ्योऽर्थान्तरमिच्छन्ति तन्मतप्रतिक्षेपार्थं सकलविपर्य्ययसंग्रहार्थञ्च द्वितीयमुदाहरण-मित्युदाहार्षीत्। स्वप्नज्ञानस्य कथं विपर्य्ययत्वमिति चेत्। गजादीनां प्रागनुभूतानां स्वप्ने देशकालावस्थावैपरीत्येनानुभव-नात्। अन्यत्रानुभूतमन्यत्र कथं स्मर्य्यत इति चेत्। अनुभवोऽनु-युज्यताम्। न खल्वनुभवेऽप्यप्रतीतिर्नाम। तदुक्तञ्च

जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा।
तद्देशे वा ऽन्यदेशे वा स्वप्नज्ञानस्य गोचरः ॥

अननुभूतप्रतिभासाङ्गीकारे च षष्ठभूतप्रतिभासानुषङ्गात्। देशादिवैपरीत्यन्त्वनुभवसिद्धम्। तदेवं नैयायिकमते विपरीत-ख्यातिर्व्यवस्थापिता। इतरख्यातिनिरासो भूषणादिशास्त्रेभ्यो ज्ञेयः ॥ १६ ॥

अथानुभवपदं व्यवच्छेत्तुमाह।

स्मरणज्ञानव्यवच्छेदार्थमनुभवग्रहणमिति ॥

स्मरणञ्च तत् ज्ञानञ्चेति विग्रहः। इह ज्ञानं पञ्चधा संशयज्ञानं विपर्य्ययज्ञानं स्मरणज्ञानं धारणाज्ञानमनुभवज्ञानञ्चेति। ततः स्वविषयं प्रति सम्यक् साधनत्वेन स्मरणज्ञानस्यापि जायमानं प्रामाण्यमनुभवपदेन व्यावर्त्त्यते। स्मरणस्याननुभवरूपत्वात्। कस्मात् स्मरणज्ञानमप्रमाणमिति चेत्। रज्जुसर्पादिज्ञानवत् भ्रान्तत्वादिति ब्रूमः। दत्तग्रहादिव्यवहारः कथमिति चेन्न मानसप्रत्यक्षेणैव तस्य सिद्धत्वात्।

एतेनाक्षपादपक्षे स्मरणमप्रमाणमित्यावेदितम्। प्रयोगश्चात्र-स्मरणमप्रमाणं भ्रान्तज्ञानत्वात्। रज्जुसर्पज्ञानवदिति। यत्र तु स्मरणाज्ञानेति पाठस्तत्राज्ञानपदेन स्वर्गसाधनस्य यागादेर्व्यवच्छेदः ॥ १७ ॥

साधनपदव्यवच्छेदमाह।

प्रमातृप्रमेयव्यवच्छेदार्थं फलाङ्गेदज्ञापनार्थं च साधनग्रहणमिति ॥

साध्यते अनेनेति करणाभिधायिना साधनपदेन प्रमातृप्रमेययोः कर्त्तृकर्म्मणोः फलस्य च प्रमारूपस्य प्रामाण्यं व्यवच्छिद्यते। करणस्य साधकतमत्वात्। प्रमात्रादीनां चासाधकतमत्वात्।

ननु कथं प्रमात्रादीनां प्रामाण्यप्रसक्तिर्यन्निवृत्त्यै साधनपदोपादानमिति चेत्। व्युत्पत्तिबलादित्याचक्ष्महे। तथाहि। अनुभवतीति कर्त्तृव्युत्पत्त्या प्रमातुरनुभूयत इति कर्म्मव्युत्पत्त्या प्रमेय-

स्यानुभूतिरिति भावव्युत्पत्त्या प्रमायाश्च प्रामाण्यं स्यात्तच्चानिष्टं तेषां प्रमाणाङ्गेदेन सर्वत्र प्रसिद्धत्वात्। तथा साधनपदेन प्रमाण-फलयोर्भेदं ज्ञापयता तदपि प्रत्युक्तम्। यदुक्तं बौद्धैः।

परिच्छेदरूपमेव ज्ञानमुत्पद्यते। न च परिच्छेदादृते ज्ञान-मन्यत् फलं प्रसूते। भेदे तु यथा प्रमात्रा सह संबध्यते तथा तदितरेणापि सम्बद्ध्यतां निर्विशेषादित्यादि। भेदे सति हि प्रमाणफलव्यवस्थानात्। न खलु दीपएव प्रकाशो दात्रमेव वा च्छिदिक्रिया करणत्वेन क्रियात्वेन च तयोर्लोकेऽपि भेदेनोप-लम्भात्। प्रयोगश्चात्र प्रमाणफले भिद्येते करणक्रियात्वात्। ये एवं ते एवं यथा दात्रच्छिदिक्रिये अभेदे तु प्रमाणाभावो वा फलाभावो वा स्यादिति ॥ १८ ॥

प्राक् प्रमात्रादीनां प्रामाण्यनिवृत्त्यर्थं साधनग्रहणमित्युक्तम्। ततोऽविज्ञातस्वरूपाणां तेषां तत् दुरुच्छेदमिति प्रमातुः प्रमाधार-त्वेन प्रमां लक्षयति।

सम्यगनुभवः प्रमिति ॥

सम्यक् पदं प्राग्वत् संशयादिनिरासार्थमनुभवमात्रस्य तत्रापि सत्त्वात्। प्रमितिः प्रमाणफलमिति यावत् ॥ १९ ॥

प्रमातारमाह।

प्रमाश्रयः प्रमातेति ॥

प्रागुक्तायाः प्रमायाः आश्रयः। समवायिकारणं प्रमाता भवतीत्यर्थः ॥ २० ॥

प्रमेयमाह।

प्रमाविषयः प्रमेयमिति ॥

प्रमायां योऽर्थः प्रतिभाति स प्रमेयं विषयोऽर्थ इति यावत् । एतेन सद्रूपमसद्रूपं वा न किञ्चिदत्रानुद्दिष्टं प्रमाविषयत्वेन सर्वस्य प्रमेयत्वादिति । इतीति । इतिशब्दः प्रमाणसामान्य-लक्षणसमाप्त्यर्थः ॥ २१ ॥

प्रमाणं सामान्येन लक्षयित्वा विशेषलक्षणाय तद्विभजते ।

*त्रिविधं प्रमाणं प्रत्यक्षमनुमानमागम इति ॥

तिस्रो विधाः प्रकारा यस्येति त्रिविधं त्रिप्रकारं प्रमाणं भवतीत्यर्थः । कथमित्याह प्रत्यक्षमित्यादि । अक्षमिन्द्रियं ततः, प्रतिगतमक्षं प्रत्यक्षमिति गतिक्रान्त्यस्तत्पुरुष इत्यनेन तत्पुरुषसमासो ऽव्ययीभावे तु प्रत्यक्षो घटः प्रत्यक्षा स्त्रीति व्यपदेशो न स्यात् ।

ननु यथेन्द्रियसामर्थ्यात् ज्ञानं जायते तथाऽर्थसामर्थ्यादपि तत् कस्मादक्षेणैव व्यपदेशो नार्थेनेति चेन्न । अक्षस्यासाधारण-त्वादर्थस्य च साधारणत्वात् । इन्द्रियं स्वविज्ञानस्यैव हेतुरर्थस्तु मनोज्ञानस्यापीति । व्यपदेशस्य चासाधारण्यमूलत्वात् । प्रतिगत-मक्षं प्रत्यक्षमिति व्युत्पत्तिनिमित्तम् । प्रवृत्तिनिमित्तं तु साक्षा-त्कारित्वलक्षणः शब्दार्थएवान्यथा मानसप्रत्यक्षादेरसम्भवात् । अनु लिङ्गदर्शनस्य पश्चान्मीयतेऽनेनेत्यनुमानम् । आगम्यन्ते मर्य्यादया-ऽवबुध्यन्तेऽर्था अनेनेत्यागमः । त्रिविधग्रहणमवधारणार्थं सर्वं-

---

* In our text the word तत् is added before the reading adopted here. [ Vide p 2. L 13. ]

प्रमाणव्यक्तीनां प्रत्यक्षादिभिस्त्रिभिरेव संगृहीतत्वात्। उपमानादयस्त्वात्रैव पुरोऽन्तर्भावयिष्यन्ते।

प्रत्यक्षपरोक्षभेदेन द्विविधमेव प्रमाणमिति चेन्न। परोक्षेणाहं वेद्मीति प्रसिद्ध्यभावात्। परोक्षशब्देनानुमानागमावेवोच्येते। इति चेत्तर्ह्यस्मदुक्ते त्रैविध्ये को द्वेषः। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति मूलविभागसूत्रेण त्रैविध्यविरोध इति चेन्न। विभागस्यात्राधिकसंख्याव्यवच्छेदफलत्वात्। अन्यथा लक्षणचतुष्टयाभिधानादेव चतुष्ट्वसिद्धेर्विभागोऽप्यनर्थकः स्यात्।

ननु प्रत्यक्षमनुमानमागम इति क्रमोपन्यासे को हेतुरिति चेदुच्यते। स्पष्टत्वात् सर्वप्रमाणश्रेष्ठत्वाच्च प्राक् प्रत्यक्षस्य तदुपजीव्यप्रवर्त्तमानत्वात्ततोऽनुमानस्य तद्द्वयमूलत्वात् ततोऽप्यागमस्योपन्यासः। तथा प्रत्यक्षमनुमानमागम इति व्यस्ताभिधानम्। प्रत्येकं स्वविषयक्षमौ स्वप्राधान्यार्थम्। इतिशब्द उक्तप्रकारावधारणार्थ उक्तप्रकारेणैव त्रिविधं नान्यथेत्यर्थः ॥ २२ ॥

अथ प्रत्यक्षं लक्षयति।

तत्र सम्यगपरोक्षानुभवसाधनं प्रत्यक्षमिति ॥

अत्र तत्र शब्दस्त्रयाणां मध्ये प्रत्यक्षनिर्द्धारणार्थः। प्रत्यक्षमिति लक्ष्यं शेषन्तु लक्षणम्। प्रत्यक्षशब्दार्थः पूर्ववत्। अपरोक्षश्चासावनुभवश्चेति कर्मधारयः। तस्य साधनं करणं घ्राणादीन्द्रियपञ्चकं मनश्चेति। अत्र प्रत्यक्षमिति लक्षणे कृते किमपेक्षा स्यात्तन्निवृत्त्यै साधनमित्युक्तम्। तथापि स्वर्गादिसाधनत्वेन यागादावतिव्याप्तिव्यावृत्त्यै अनुभवेति पदम्। एवमप्यनुभव-

साधनत्वादनुमानेऽतिप्रसङ्गापनुत्त्यै अपरोक्षेति पदम् । इत्थमपि प्रत्यक्षाभासेऽतिप्रसक्त्यपास्तये सम्यगिति पदम् । ततः सम्यगपरोक्षानुभवो यथार्थार्थसाक्षात्कारो येन साध्यते तत्प्रत्यक्षप्रमाणमित्यर्थः ॥ २३ ॥

तद्भेदमाह ।

तद्विविधं योगिप्रत्यक्षमयोगिप्रत्यक्षञ्चेति ॥

द्विविधग्रहणं चातुर्विध्यनिषेधार्थम् । तेन मानसप्रत्यक्षं स्वसंवेदनप्रत्यक्षञ्च पृथग् न युक्तम् । योग्ययोगिप्रत्यक्षयोरेवान्तर्भूतत्वात् । अष्टाङ्गयोगयुक्ता ये ते योगिनस्तद्विपरीता अयोगिनः चकारात् सविकल्पकनिर्विकल्पकाभ्यामपि द्विविधमित्यर्थः ॥२४॥

अत्युत्कृष्टत्वात् प्रागुद्दिष्टस्यापि योगिप्रत्यक्षस्यायोगिप्रत्यक्षपूर्वत्वात्तदेवादौ लक्षयति ।

तत्रायोगिप्रत्यक्षं प्रकाशदेशकालधर्माद्यनुग्रहादिन्द्रियार्थसंबन्धविशेषेण स्थूलार्थग्राहकमिति ॥

अत्र सूत्रकारेच्छावैचित्र्यात् पूर्वनिपतितमप्ययोगिप्रत्यक्षपदं व्याख्यानादावन्ते वाच्यम् । लक्षणमभिधायैव लक्ष्यमभिधातुमुचितत्वात् । एवमन्यत्रापि ज्ञेयम् । तत्रशब्दो निर्द्धारणार्थः स्थूलार्थानां यद्ग्राहकं प्रमाणं तदयोगिप्रत्यक्षं भवतीत्यन्वयः ।

केनेत्याह । इन्द्रियेत्यादि । इन्द्रियाणि चक्षुरादीनि अर्थाः पृथिव्यादयो रूपादयश्च तेषां मिथः संबन्धविशेषः संयोगसंयुक्तसमवायादिस्तेनासाधारणकारणेन । कस्मात् प्रकाशेत्यादि । प्रकाशो दीपाद्यालोको देशः पुरोवर्त्यादि कालो वर्त्तमानादिः

धर्मोऽभीष्टज्ञाने आदिशब्दादधर्मोऽनिष्टज्ञाने सर्वनिमित्तत्वादीश्वरादिश्च तेषामनुग्रहः सन्निकर्षस्तस्मात् । अत्रार्थग्राहकमित्युक्ते परमाण्वादेरप्युपलब्धिः स्यात्तदसितुं स्थूलेति पदम् । स्थूलत्वञ्च परमाण्वपेक्षया । सूक्ष्मरूपादेरपि गृह्यमाणत्वात् ।

तथाप्यनुमानेऽतिव्याप्तिस्तामपोहितुमिन्द्रियेत्यादि । तत्रापि कस्याप्यर्थस्य केनापि संबन्धेन गृह्यमाणत्वात् संबन्धविशेष इति । तथापि योगिप्रत्यक्षेऽपि प्रसक्तिस्तान्निषेद्धुं प्रकाशेत्यादि । योगिप्रत्यक्षस्य केवलधर्मजनितसाहाय्यापेक्षितत्वात् । ततोऽयमर्थः प्रकाशाद्यनुग्रहमपीन्द्रियार्थसंबन्धवैशिष्ट्येन स्थूलाद्यर्थपरिच्छेदकं यत्प्रमाणं तदयोगिप्रत्यक्षं भवति ।

ननु घ्राणरसनस्पर्शनानामस्त्वर्थसंबन्धस्तत्कृतानुग्रहोपघातदर्शनाच्चक्षुःश्रोत्रयोस्तु कथमग्न्यादिप्रसङ्गेन दहनादिप्रसङ्गात् । शब्दं प्रत्यगमनाच्च । तथाच प्रयोगः । चक्षुःश्रोत्रे न प्राप्यकारिणी सान्तरग्रहणात् । प्राप्यकारित्वे हि चक्षुरर्थयोः श्रोत्रशब्दयोश्चान्तरालग्रहणं न स्यात्परशुवृक्षवदिति युक्तिसद्भावादिति चेत् । उच्यते प्रमाणात् तथाहि चक्षुःश्रोत्रे प्राप्यार्थं परिच्छिन्दाते बाह्येन्द्रियत्वात् । त्वगिन्द्रियवदिति । प्राप्त्यभावे सर्वार्थोपलम्भः स्यान्न हि प्राप्तिं विनाऽन्या काचिद्योग्यतास्ति । यया योग्यदेशावस्थितस्यैव ग्रहणं नान्यस्येति । अत्र बहु वक्तव्यं तत्तु नोच्यते । ग्रन्थविस्तरभयात् ॥ २५ ॥

इन्द्रियार्थसंबन्धविशेषेण स्थूलार्थग्राहकमयोगिप्रत्यक्षमित्युक्तं तत्र येन संबन्धेन यस्य ग्रहणन्तमाह ।

तद्यथा। चक्षुःस्पर्शनसंयोगात् घटादिद्रव्यज्ञानमिति॥

चक्षुः स्पर्शने प्रतीते तयोः संयोगोऽप्राप्तिपूर्विका प्राप्तिस्ततो घटादिद्रव्यज्ञानं भवति। आदिशब्दात्पटादिद्रव्याक्षेपः। दिवा चक्षुःसंयोगात्तमिस्रायाञ्चक्षुरगोचरत्वे स्पर्शनसंयोगाच्च घटादिद्रव्यज्ञानं भवतीत्यर्थः।

ननु यदि संबन्धवशादेवार्थग्रहणं तर्हि तेन सर्वात्मनार्थस्य संबद्धत्वात्। सर्वात्मनार्थग्रहणं प्रसज्येतेति चेन्न। कारणस्य नियतविषये समर्थत्वान्न हि परशुः संबद्धोऽपि द्रुमवत्तद्गतं व्योमापि च्छिनत्ति॥ २६॥

एवं द्रव्यविषयं प्रत्यक्षमुक्त्वा गुणविषयं तदाह।

*संयुक्तसमवायात्ताभ्यां घटत्वादिसंख्यापरिमाणादिज्ञानमिति॥

चक्षुःस्पर्शनसंयुक्ते घटादिद्रव्ये समवायो यत् समवेतत्वं तस्मात् संबन्धात्। ताभ्यामिति चक्षुःस्पर्शनाभ्याम्। घटत्वादीनां सामान्यानां संख्यादीनाञ्च विशेषाणां ज्ञानं भवति। परिमाणमिति अणुमहदादि। प्रथमादिशब्दात् सत्त्वपृथिवीत्वग्रहः। द्वितीयादिशब्दात् पृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगकर्म्मग्रहः। कोऽर्थः। संयुक्तसमवायसंबन्धाच्चक्षुषा संयुक्ते घटादिद्रव्ये समवेतानां घटत्वादीनां संख्यादीनाञ्च चाक्षुषं ज्ञानं भवति। स्पर्शनेन संयुक्ते द्रव्ये तेषामेव स्पार्शनं ज्ञानं भवति। कर्म्मणां कथं

---

* In our text the word आदि in घटत्वादि is omitted. ( Vide page 2. Line 18. )

प्रत्यक्षत्वमिति चेत् । प्रमाणात् । हस्तचलनादिकर्म्मप्रत्यक्षं अगुणत्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षाश्रयाश्रितत्वाद्रूपादिवदिति । एतेन द्रव्यादीनां कर्म्मान्तानां द्वीन्द्रियग्राह्यत्वमुक्तम् ॥ २७ ॥

अथ संयुक्तसमवायसंबन्धादेवैकेन्द्रियग्राह्याणां रूपादीनां ग्रहणमाह ।

चक्षुषैव रूपज्ञानमिति ॥

चक्षुषैवेत्यवधारणं रूपज्ञानस्यान्येन्द्रियजन्यत्वप्रतिषेधार्थम् । स च बहिःकरणापेक्षयान्तःकरणस्य रूपादिषु सर्वेष्वपि व्याप्रियमाणत्वात् । एवमग्रेऽपि योज्यम् । चक्षुःसंयुक्तं द्रव्यं तत्र समवायो रूपस्य समवेतत्वं यत्तस्मात् संयुक्तसमवायसंबन्धाच्चक्षुषैव रूपज्ञानं भवति । न च रूपज्ञानमेव चक्षुषा रूपत्वसामान्यस्यापि तेन ग्रहणात् पञ्चस्विन्द्रियेषु चक्षुषैव रूपज्ञानं कुत इति चेत् । तैजसत्वादिति ब्रूमः । तथापि न तन्नियम इति चेत् । न । यो यस्य द्रव्यस्य गुणः स तेनैव गृह्यत इति व्यवस्थायां रूपस्य तेजोगुणत्वात् । तैजसत्वे च प्रमाणमेतत् चक्षुस्तैजसं रूपादीनां मध्ये नियमेन रूपस्यैवाभिव्यञ्जकत्वात् प्रदीपवदिति ॥ २८ ॥

गन्धज्ञानमाह ।

*घ्राणेनैव गन्धज्ञानमिति ॥

घ्राणेन संयुक्तं कर्पूरादिद्रव्यं तत्र यः समवायो गन्धसमवेतत्वं तस्मात्संयुक्तसमवायसंबन्धात् घ्राणेनैव गन्धज्ञानं भवति । न च

---

* This aphorism is placed in our text after the next aphorism adopted by the commentator. ( Vide page 3. Line 1. )

गन्धज्ञानमेव घ्राणेन गन्धत्वस्यापि तेन ग्रहणात्। घ्राणस्य गन्धं प्रत्येवाभिव्यञ्जकत्वं तु पार्थिवत्वात्। घ्राणं पार्थिवं रूपादीनां मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्। कुङ्कुमगन्धाभिव्यञ्जकघृतवत्॥ २९॥

रसज्ञानमभिधत्ते।

रसनेनैव रसज्ञानमिति॥

रसनसंयुक्तं क्षीरादिद्रव्यं तत्र यः समवायो रससमवेतत्वं तस्मात्संयुक्तसमवायसंबन्धाद्रसनेनैव रसज्ञानं भवति। न च रसज्ञानमेव रसनेन रसत्वस्यापि तेन ग्रहणात्। रसनस्य रसग्रहणं त्वाप्यत्वात्। रसनमाप्यं रूपादीनां मध्ये रसस्यैवाभिव्यञ्जकत्वात् मुखशोषिणां लालादिद्रव्यवदिति॥ ३०॥

स्पर्शज्ञानमाचष्टे।

स्पर्शनेनैव स्पर्शज्ञानमिति॥

स्पर्शनेन संयुक्तं दुकूलादि तत्र यः समवायः स्पर्शसमवेतत्वं तस्मात् संयुक्तसमवायसम्बन्धात् स्पर्शनेनैव स्पर्शज्ञानं भवति। नतु स्पर्शज्ञानमेव स्पर्शनेन स्पर्शत्वस्यापि तेन ग्रहणात्। स्पर्शनस्य स्पर्शव्यञ्जकत्वे वायवीयत्वं हेतुस्तत्सिद्धिश्चैवम्। स्पर्शनं वायवीयं रूपादीनां मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्। अङ्गसङ्गिसलिल-शैत्याभिव्यञ्जकसमीरणवदिति॥ ३१॥

संबन्धान्तरेण पुरो वक्ष्यमाणत्वात् शब्दग्रहणमुपेक्ष्य सुखादि-ज्ञानमाह।*

---

* The commentator did not adopt the aphorism "श्रोत्रेणैव शब्द-ज्ञानम्" here. ( See page 3. Line 2. )

**मनसैव सुखादिज्ञानमिति ॥**

सुखमनुग्रहरूपं आदिशब्दादुपघातरूपदुःखमिच्छाद्वेषप्रयत्नाश्च। मनःसंयुक्त आत्मा तत्र सुखादीनां समवायस्तद्गुणत्वात्ततः संयुक्तसमवायसम्बन्धान्मनसैव सुखादीनां ज्ञानं भवति। न च सुखादिज्ञानमेव मनसा सुखादित्वस्यापि तेन संवेदनात्। अत्रैवकारो बाह्येन्द्रियनिरासार्थः। मनःसद्भावे किं प्रमाणमिति चेत्। उच्यते युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति।

यद्वा आत्मनो विभुत्वात्सर्वेन्द्रियाणां सर्वार्थसम्बन्धे सत्यपि यद्विना न परिच्छित्तिरुदेति तदन्तःकरणम्। आत्मेन्द्रियार्थसन्निकर्षाः करणान्तरापेक्षाः। सत्यपि तद्भावे कार्य्यानुत्पादकत्वात् तन्त्वादिवत्। तथा सुखादिप्रतीतिरिन्द्रियजा अपरोक्षप्रतीतित्वाद्रूपादिप्रतीतिवत्। यच्च तदिन्द्रियं तन्मनश्चक्षुरादीनां तत्र व्यापाराभावात् ॥ ३२ ॥

**सम्बन्धान्तरात् संख्यादिगतसामान्यज्ञानमाह।**

**एतेषु संख्यादिष्वाश्रितानां सामान्यानां स्वाश्रयग्राहकैरिन्द्रियैः संयुक्तसमवेतसमवायाद्ग्रहणमिति ॥**

अत्र संख्यादीति पदं घटत्वादिव्युदासार्थम्। प्राक्तनसम्बन्धेन तस्य गृहीतत्वात्। आदिशब्दात् सुखपर्य्यन्तं गृह्यते। सामान्यानामिति संख्यात्वपरिमाणत्वरूपत्वादीनाम्। स्वाश्रयग्राहकैरिति। संख्यादिषु समवेतानां चक्षुषा स्पर्शनेन वा रूपादिसमवेतानां सामान्यानां चक्षुराद्येकैकेनेन्द्रियेण च ग्रहणात् स्वस्वविषयवेदिभिः इन्द्रियैरिति बहुत्वम्। सर्वेन्द्रिये मनःप्रतिपत्त्यर्थं

संयुक्तसमवेतेत्यादि। इन्द्रियसंयुक्तं यत् द्रव्यं तत्र समवेता ये संख्यादयः तत्र यः समवायः संख्यात्वादिसामान्यानां तस्मात्संयुक्तसमवेतसमवायसम्बन्धात्। स्वाश्रयग्राहकैः स्वस्वविषयपरिच्छेत्तृभिश्चक्षुरादिभिरिन्द्रियैः संख्यादिषु स्थितानां सामान्यानां ग्रहणं भवतीत्यर्थः॥ २३॥

सम्बन्धान्तरात् शब्दज्ञानोपायमाह।

*श्रोत्रसमवायाच्छ्रवणेनैव शब्दज्ञानमिति॥

शब्दोपभोगप्रापकधर्माधर्मोपनिबद्धः श्रवणविवरसंज्ञितो नभोदेशः श्रोत्रम्। तत्र श्रोत्रे स्वहेतुभ्यः समुत्पन्नादाद्यशब्दाद्वीचीतरङ्गन्यायेनान्यान्यशब्दोत्पत्तौ सत्यां प्राप्तस्यान्तिमशब्दस्य यः समवायस्तस्माच्छब्दज्ञानं भवति। ननु शब्दज्ञानमेव श्रोत्रेण शब्दत्वस्यापि तेन ग्रहणात्। ननु कथं श्रोत्रे शब्दसमवाय इति चेन्न। श्रोत्रस्य नभस्त्वाच्छब्दस्य च तद्गुणत्वात्। यो हि यद्गुणः स तत्र पृथिव्यां गन्धवत्समवैतीति॥ २४॥

शब्दसामान्यज्ञानमाह।

तदाश्रितसामान्यज्ञानं समवेतसमवायादिति॥

तत्र शब्दे आश्रितानि यानि सामान्यानि शब्दत्वकत्वादीनि तेषां श्रोत्रेन्द्रिये समवेता ये शब्दास्तेषु यः समवायः शब्दत्वादीनां तस्मात्समवेतसमवायाद्ग्रहणं भवति॥ २५॥

अथ षष्ठं सम्बन्धमाह।

---

* In our text "श्रवणेनैव" is omitted (Vide p. 3. Line 5.)

*एतत्पञ्चसम्बन्धसम्बद्धविशेषणविशेष्यभावात् दृश्याभावसम-वाययोर्ग्रहणमिति॥

एतदिति पूर्वोक्ताः संयोगः, संयुक्तसमवायः, संयुक्तसमवेत-समवायः, समवायः, समवेतसमवायश्चेति पञ्चसम्बन्धास्तैः सम्बद्धा अर्थाद् येऽर्थास्तैः सहाभावस्य समवायस्य च यो विशेषणविशेष्यभाव इतरसम्बन्धवैधर्म्येण सन्निधिविशेषोऽन्यथा तस्य प्रतिनियताश्रयवर्त्तित्वेन द्विष्टरूपत्वानुपपत्तिः तस्मादभाव-समवाययोर्ज्ञानं भवति। दृश्येति पिशाचाद्यभावव्यवच्छेदार्थम्। समवाय इति सम्बन्धः। ततः पञ्चसम्बन्धसम्बद्धविशेषणविशेष्य-भावसम्बन्धादभावसमवाययोर्ग्रहणं भवतीत्यर्थः॥ २६॥

संयुक्तविशेषणभावेनाभावग्रहणमाह।

तद्यथा घटशून्यं भूतलमिति॥

अत्रेन्द्रियसंयुक्तं भूतलं विशेष्यं तस्य घटशून्यमिति विशे-षणम्। घटाभावस्य तत्र स्थितत्वात्। तत इन्द्रियसंयुक्त-भूतलविशेषणतया घटाभावो गृह्यत इति॥ २७॥

संयुक्तविशेष्यभावेनाभावग्रहणं दर्शयति।

इह भूतले घटो नास्तीति॥

अत्रेह भूतल इति विशेषणस्य घटाभावो विशेष्यः। नन्वयमाधाराधेयभावो विशेषणविशेष्यभावः सामानाधिकरण्या-भावादिति चेत्। न। विशेषणविशेष्यभावस्यात्र सन्निधिमात्र-

* The reading adopted by the commentator here differs somewhat from our text. ( See page 3. Line 6-8. )

पर्य्यवसितत्वमिति प्रागुक्तत्वात्। भूषणकारस्तु विशेषणविशेष्य-भावस्यानियतत्वात्। उभयथाप्युदाहरणं युक्तमित्याह ॥ ३८ ॥

संयुक्तविशेषणविशेष्यतयाऽभावग्रहणमुक्त्वा संयुक्तसमवेतविशेषणविशेष्यभावादिनाऽभावग्रहणं स्वयमभ्यूह्यमित्याह।

एवं सर्वत्रोदाहरणीयमिति ॥

अस्यायमर्थः। इन्द्रियसंयुक्ते घटे समवेतमशुक्लं कृष्णरूपं कृष्णरूपे शुक्लरूपं नास्तीति संयुक्तसमवेतविशेषणविशेष्यतया कृष्णरूपे शुक्लरूपाभावस्य ज्ञानम्। तथा इन्द्रियसंयुक्तघटसमवेतमशौक्ल्यं कृष्णत्वसामान्यं कृष्णत्वे शौक्ल्यं नास्तीति संयुक्तसमवेतसमवेतविशेषणविशेष्यभावात् कृष्णत्वे शौक्ल्याभावस्य ज्ञानम्। अतीव्रो वेणुशब्दो वेणुशब्दे तीव्रत्वं नास्ति। श्रोत्रसमवेतशब्दविशेषणविशेष्यभावात् शब्दे तीव्रत्वाभावज्ञानम्। भेदशून्यं शब्दत्वं शब्दत्वे भेदो नास्तीति श्रोत्रसमवेतशब्दसमवेतशब्दत्वविशेषणविशेष्यभावात् शब्दत्वे भेदाभावस्य ज्ञानमिति ॥ ३९ ॥

समवायग्रहणं दर्शयति।

*समवायस्य तु क्वचिदेव यथा घटे रूपसमवाय इति ॥

तुशब्दोऽभावात्समवायं व्यवच्छिनत्ति। अभावो हि नावश्यमुभयज्ञानमपेक्षते। अधिष्ठानज्ञानं विनापि प्रतियोगिस्मृतिमात्रान्महान्धकारे प्रदीपाभावावभासवदभावप्रतिभासात्। सम-

* The reading adopted by the commentator here, differs somewhat from our text. ( See page 3. Line 10. )

वायस्य तूभयज्ञानापेक्षणादभावाद्विशेषः। अतएव क्वचिदित्युक्तम्। कोऽर्थः। यत्र सम्बन्धिद्वयमपि प्रत्यक्षं तत्रैव समवायप्रत्यक्षो यथा तन्तुपटयोर्नान्यत्र। त्र्यणुकादौ द्व्यणुकस्यानुपलम्भात्। अथवा क्वचिदेवेति स्थानत्रयेऽपि ग्रहणम्। यथा घटे रूपसमवायः रूपे रूपत्वसमवायः शब्दे शब्दत्वसमवायः इति। यद्वा क्वचिदिति। स्वदर्शन एव समवायस्य प्रत्यक्षत्वं नान्यदर्शनात्। कथं तस्य प्रत्यक्षत्वमिति चेत्। समवायप्रत्ययः प्रत्यक्षवृत्तिः सम्बन्धप्रत्ययत्वात्संयोगप्रत्ययवदित्यनुमानात्।

ननु सम्बन्धान्तरग्रहणेऽनवस्थादोषादसम्बद्धः समवायः कथं गृह्यत इति चेन्न। अदृष्टादिसहितात् प्रत्यक्षयोग्योभयसम्बन्धीन्द्रियसन्निकर्षादेव समवायग्रहणोपपत्तेः। सत्तायां सत्तान्तरवत्सम्बन्धान्तरं नेष्यते। स च समवायः समवायिनोरिन्द्रियसन्निकृष्टयोर्विशेषणविशेष्यप्रतीतिहेतुत्वात्संयुक्तविशेषणभावादीनामन्यतमव्यपदेशयोग्यश्च स्यात्। ततः समवायः समवायिनोर्विशेषणत्वेन विशेष्यत्वेन वा गृह्यत इति। यथा घटे इत्युदाहरणम्। अत्र घट इति विशेषणम्। रूपसमवाय इति विशेष्यम्। संयुक्तविशेषणविशेष्यतया समवायग्रहणं भवतीत्यर्थः। समवायस्य किं स्वरूपमिति चेत्। अयुतसिद्धानामाधार्य्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः स समवायः।

अस्य व्याख्या। युतसिद्धिरुभयोरपि सम्बन्धिनोः परस्परपरिहारेण पृथगाश्रयाश्रयित्वम्। सा ययोर्नास्ति तावयुतसिद्धौ तयोः सम्बन्धः समवायः। यथा तन्तुपटयोः। नित्यानां तु

युतसिद्धिः पृथग्व्यवस्थितिः पृथग्जननयोग्यता सा ययोर्नास्ति तावयुतसिद्धौ तयोः सम्बन्धः समवायः। यथाकाशद्रव्यत्वयोः। आत्मैकाश्रितयोर्धर्म्मसुखयोः कार्य्यकारणभावेऽतिव्याप्तिनिवृत्त्यर्थमाधार्य्याधारभूतानामिति पदम्। न त्वाकाशपक्षिसम्बन्धव्यवच्छित्त्यै तस्यायुतपदेनैव निवर्त्तितत्वात्। आकाशतत्पदयोर्वाच्यवाचकभावेऽतिप्रसक्तिव्यपोहार्थमिहेति पदम्। संयोगेऽतिप्रसङ्गभङ्गायायुतसिद्धेति पदमिति॥ ४०॥

अथ योगिप्रत्यक्षं लक्षयति।

योगिप्रत्यक्षन्तु देशकालस्वभावविप्रकृष्टार्थग्राहकमिति॥

देशविप्रकृष्टा मेर्वादयः। कालविप्रकृष्टास्त्वतीतानागताः। स्वभावविप्रकृष्टाः परमाण्वादयस्तेषां समस्तानां व्यस्तानां वा ग्राहकं यत्प्रत्यक्षं तद्योगिप्रत्यक्षं भवति। अर्थग्राहकमित्युक्तेऽयोगिप्रत्यक्षेऽतिव्याप्तिस्तदपोहार्थं देशेत्यादिपदम्। तु शब्दोऽयोगिप्रत्यक्षाद्योगिप्रत्यक्षव्यतिरिक्तार्थः। न च वाच्यं योगिप्रत्यक्षं नास्तीति प्रमाणसिद्धत्वात्। ज्ञानतारतम्यं क्वचित् सातिशयं तारतम्यत्वात् परिमाणतारतम्यवदिति। न च ताप्यमानास्वप्सु औष्ण्यतारतम्ये वह्निरूपतापत्त्यतिशयादर्शनाद् व्यभिचारी हेतुः हेम्नि पुटपाकप्रबन्धाहितविशुद्धिवत् स्थिराश्रयेऽतिशयोपपत्तेः तस्मादाश्रयस्थैर्य्यादात्मनि ज्ञानातिशय उपपद्यते॥ ४१॥

तत् युक्तावस्थावियुक्तावस्थाभेदेन द्विधा भवतीति प्राक् युक्तावस्थायां योगिप्रत्यक्षमाह।

*तत्र युक्तावस्थायामात्मान्तःकरणसंयोगादेव धर्म्मादिसहिता-दशेषार्थग्रहणमिति ॥

समाधिसहितावस्था युक्तावस्था । आत्मान्तःकरणसंयोगादे-वेत्यवधारणं बाह्यार्थसंयोगनिषेधार्थम् । धर्म्मादीति प्रकृष्टयोग-जनितं पुण्यं धर्म्मः । आदिशब्दादीश्वरादिग्रहः ।

अयमर्थः । योगजनितधर्मेश्वरादिसहकृतादात्ममनःसन्नि-कर्षाद्विप्रकृष्टार्थग्राहकं यत् प्रत्यक्षं तद्युक्तावस्थावस्थितयोगि-प्रत्यक्षं भवति । एतच्चोत्कृष्टयोग्यपेक्षया, योगिमात्रस्य तद-सम्भवात् ॥ ४२ ॥

द्वितीयं भेदं वक्ति ।

वियुक्तावस्थायां चतुष्टयत्रयद्वयसन्निकर्षाद्ग्रहणं यथासम्भावनं योजनीयमिति ॥

असमाध्यवस्था वियुक्तावस्था । चतुष्टयेत्यादि आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति चतुष्टयम् । आत्ममनः-श्रोत्रसंयोगस्त्रयम् । आत्ममनोयोगो द्वयम् । यथासम्भवेनेति । यत्र यावत्सम्भवति तत्र तदनतिक्रमेण । कोऽर्थः । घ्राणरसनचक्षु-स्त्वचामन्यतमेनार्थग्रहणेन । चतुर्णामात्मान्तःकरणबाह्येन्द्रियगन्धा-द्याश्रयाणां योगः । शब्दग्रहणे आत्ममनः श्रोत्राणां त्रयाणां योगः । सुखादीनां ग्रहणे आत्ममनसोर्द्वयोर्योगः ॥ ४३ ॥

---

* In the text, the reading "तत् द्विविधम् । युक्तावस्थायामयुक्ताव-स्थायाश्चेति" precedes the reading adopted here by the commentator ( Vide p. 3. L. 13 ).

प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा विद्येति वचनात्कैश्चिदार्षं पृथक् प्रमाणं प्रतिपेदे तदन्तर्भावायाह।

अत्रैवार्षमन्तर्भूतं प्रकृष्टधर्म्मजत्वाविशेषादिति॥

ऋषीणां व्यासादीनामिदमार्षं विशिष्टतपोलब्धिसमुत्थं ज्ञानमत्रैव योगिप्रत्यक्षेऽन्तर्भूतम्। अत्र हेतुः प्रकृष्टेत्यादि। इदं तत्त्वम्। योगिप्रत्यक्षे आर्षज्ञाने च विशिष्टो धर्म्म एव हेतुः। स योगजनितस्तपोजनितो वास्तु न तेन भेदो द्वयोरपि धर्म्महेतोरैक्यात्॥ ४४॥

प्रत्यक्षसामान्यस्य पुनर्द्वैविध्यमाह।

तच्च द्विविधं सविकल्पकं निर्विकल्पकञ्चेति॥

तदिति योगिप्रत्यक्षं सविकल्पकं निर्विकल्पकं च सद्विभेदं भवतीत्यर्थः॥ ४५॥

तत्रादौ सविकल्पकप्रत्यक्षं लक्षयति।

तत्र संज्ञादिसम्बन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकमिति॥

संज्ञा देवदत्तादिका। आदिशब्दात् द्रव्यगुणकर्मादयस्तेषां सम्बन्धस्योल्लेखः तद्विषयज्ञानोत्पादस्तेन सहकारिणा विशिष्टज्ञानोत्पत्तौ यत्कारणं तत्सविकल्पकं प्रत्यक्षं भवति। जात्याद्युल्लेखो विकल्पः। उत्पत्तिनिमित्तमित्युक्ते मृदादेर्घटोत्पत्तिं प्रति निमित्तत्वात्तत्रातिव्याप्तिस्तद्व्युदासार्थं ज्ञानेति पदम्। तथापि निर्विकल्पकेऽतिप्रसक्तिस्तद्व्यावृत्त्यर्थं संज्ञेत्यादिपदम्। अनेन च लक्षणेन "प्रत्यक्षं कल्पनापोढमभ्रान्तमिति"

शाक्योक्तं प्रत्यक्षलक्षणं प्रतिक्षिप्तं ज्ञेयम्। संज्ञादिज्ञानस्य तन्मूलत्वात्। प्रत्यक्षस्य सविकल्पकत्वाभावे अनुमानानुत्थानप्रसङ्गाच्च। सविकल्पकस्थिरप्रत्यक्षोपात्तधूमाग्निव्याप्ति-स्मरणनान्तरीयकत्वात् तस्येति ॥ ४६ ॥

प्रत्यक्षस्यातीन्द्रियत्वात् तत्फलमुदाहरति।

यथा देवदत्तो दण्डीत्यादि ॥

अत्र देवदत्त इति ज्ञानं केवलसंज्ञासम्बन्धोल्लेखेन। दण्डीति विशेषणसम्बन्धोल्लेखेन। ननु किं प्राग् विशेषणज्ञानं विशेष्यज्ञानमुभयज्ञानं वा युगपत्। उच्यते संज्ञादण्डादिविशेषणज्ञाने प्रागुत्पन्ने सति तत्सहकारिणेन्द्रियेण विशेषणविशेष्यविषयैकज्ञानोत्पत्तिरिति। संज्ञायाश्च विशेषणत्वं व्यावर्त्तकत्वात्। आदिशब्दाद्रक्तो घट इत्यादि। इदं च संज्ञादिसम्बन्धोल्लेखिज्ञानं प्रत्यक्षम्। इन्द्रियव्यापारभावभावित्वात्। प्रथमाक्षसन्निकर्षोत्पन्ननिर्विकल्पकज्ञानवदिति ॥ ४७ ॥

निर्विकल्पकं लक्षयति।

वस्तुस्वरूपमात्रावभासकं निर्विकल्पकमिति ॥

किमपीदमस्तीति वस्तुस्वरूपमात्रं येन ज्ञानेनावभास्यते तन्निर्विकल्पकं प्रत्यक्षं भवति। मात्रग्रहणं संज्ञादिसम्बन्धनिवृत्त्यर्थं तेन सविकल्पके नातिव्याप्तिः ॥ ४८ ॥

तत्फलमुदाहरति।

यथा प्रथमाक्षसन्निपातजं ज्ञानमिति ॥

अक्षाणीन्द्रियाणि तेषां प्रथमे सन्निपाते सति समयस्मरण-

विशेषग्रहणनिरपेक्षं यद्ज्ञानमुत्पद्यते तन्निर्विकल्पकं प्रत्यक्षं भवति । नन्वनुभवक्षणे प्रागेव सविकल्पकोदयात्तन्नास्तीति चेन्न । अभ्यासदशायां सविकल्पकस्याशूत्पादित्वान्निर्विकल्पकानुपलम्भेऽप्यनभ्यासदशायां तस्य स्फुटोपलम्भात् । तदुक्तम् ।

अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ इति ॥

तस्मादेतदस्त्येवान्यथा सविकल्पकस्याप्यनुत्थानप्रसङ्गात् ॥ ४९ ॥

ननु योगिज्ञानं निर्विकल्पकं सविकल्पकं वेत्याशङ्क्य तद्व्यवस्थामाह ।

युक्तावस्थायां योगिज्ञानञ्चेतीति ॥

समाधेरैकाग्र्यं युक्तावस्था तस्यां योगिनो ज्ञानं प्रत्यक्षं निर्विकल्पकमेव भवति । विकल्पतः समाध्यैकाग्र्यानुपपत्तेः । न च वाच्यं योगिप्रत्यक्षस्य निर्विकल्पकत्वे वस्तुस्वरूपमात्रावभासकत्वान्न किञ्चिद्वैशिष्ट्यमिति । युगपत्समस्तवस्तुविस्तारसाक्षात्कारस्यैव वैशिष्ट्यात् । अत्र युक्तावस्थाग्रहणेन वियुक्तावस्थायां योगिप्रत्यक्षं निर्विकल्पकं सविकल्पकञ्चेति प्रतिपत्तव्यमिति ।

इति श्रीकृष्णर्षिगच्छमण्डनश्रीमन्महेन्द्रसूरिशिष्यश्रीजयसिंहसूरिविरचितायां ज्ञानतात्पर्यदीपिकाभिधानायां श्रीन्यायसारटीकायां प्रत्यक्षपरिच्छेदः समाप्तः ।

---

## अनुमानपरिच्छेदः।

प्रथमपरिच्छेदे सभेदं प्रत्यक्षं लक्षयित्वा तत्पृष्ठभावित्वादिदानी-मनुमानं लक्षयति।

सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानमिति ॥

असन्दिग्धधूमादिदर्शनात् साहचर्य्यानुस्मरणाच्चानुमीयते ज्ञायते सम्यगविनाभाविलिङ्गबलेन परोक्षोऽप्यर्थोऽनेनेत्यनुमानम्। परोक्षेति। परोक्षोऽक्षाणां परो योऽनुभवस्तस्य साधनं करणम्। सम्यगिति। सम्यग् भिन्नाधिकरणत्वप्रतीतिरहितः। स चासाव-विनाभावश्च तेन। अव्यभिचारि-नान्तरीयकत्वेन। अत्रानुभव-साधनपदे प्राग्वत्। परोक्षपदं प्रत्यक्षव्यवच्छेदार्थम्। तस्याप्यनु-भवसाधनत्वात्।

कश्चित्त्वविनाभावेनैव प्रत्यक्षस्य व्यवच्छेदे सिद्धे परोक्षपदं मिलितयोर्धूमाग्न्योर्भूयोग्रहणेनाग्न्यविनाभूतो धूम इति ज्ञानस्य मानसप्रत्यक्षत्वनिवृत्त्यर्थं तस्याप्यविनाभावमूलत्वादित्याह। आगमेऽतिव्याप्तिनिवृत्त्यर्थं अविनाभावेति पदम्। तस्य समय-बलेनार्थप्रतिपत्तिहेतुत्वात्। यत्र काकस्तत्र मैत्रगृहमित्याद्य-विनाभावाभासभिदे सम्यगिति पदम्।

भूषणकारस्तु भ्रान्तिरप्यर्थसम्बन्धतः प्रमेति शाक्यमतव्युदा-साय सम्यगिति पदं भ्रान्तेः प्रमाणत्वायोगादित्याह। सकलमपि

लक्षणं तु प्रत्यक्षैकप्रमाणवादिनं चार्वाकं प्रत्यनुमानस्य प्रामाण्य-दृढ़नार्थम्। स हि शक्रमूर्द्धादौ धूमदर्शनेऽपि धूमध्वजाभावात् यत्र यत्र धूमस्तत्र तत्र वह्निरिति-व्याप्तेर्व्यभिचारित्वेन तादृग्व्याप्ति-मूलत्वादनुमानमप्रमाणमिति ब्रूते। स चेत्थं दारटह्विकल्पतः प्रतिक्षेप्तव्यः।

तथाहि। शक्रमूर्द्धा किमग्निस्वभावोऽन्यथा वा। यद्यग्नि-स्वभावः तर्ह्यवश्यमग्निमानेव महानसादौ कोटिशस्तथा दृष्टत्वात्। अथान्यथा तदा तत्राग्निं विना कथं धूमः स्यात्। तदुक्तम्।

अग्निस्वभावः शक्रस्य मूर्द्धा चेदग्निरेव सः।
अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेदिति॥

किं चासावनुमानं विना विप्रतिपन्नं प्रति प्रत्यक्षस्यापि प्रामाण्यं कथं दृढ़येत्। अविसंवादकत्वादिनेति चेत्तन्न। तेन तत्प्रामाण्य-साधने बलादप्यनुमानापत्तिः स्यात्। तस्मात्प्रत्यक्षस्य प्रामाण्य-मभिलाषुकेण चार्वाकेणानुमानं प्रमाणत्वेनेष्टव्यमेवान्यथाऽप्रामा-णिकत्वापत्तेः। कुतोऽनुमानस्य सिद्धिरिति चेत्। प्रमाणत्वा-प्रमाणत्वसामान्यव्यवस्थानादन्यबुद्धेर्ज्ञानात्। स्वर्गादेः प्रतिषेधाच्च प्रत्यक्षादन्यत्प्रमाणं स्वभावकार्य्यानुपलब्धिलिङ्गकमनुमानं सिद्धय-तीति ब्रूमः। तदुक्तम्।

प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः।
प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचिद्॥ इति॥

तस्मात्सम्यगविनाभावेन परोक्षानुभवो येन साध्यते तदनुमान-मित्यर्थः। अन्यत्राप्युक्तम्। यथा—

पञ्चलक्षणकाल्लिङ्गाद् गृहीतान्नियमस्मृतेः।

परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्ष्यत इति॥

सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानमित्यनुमानं लक्षितम्॥ १॥

न चाविनाभावज्ञानं विना तदवगन्तुं शक्यम्। तन्मूलत्वात्तस्येत्यविनाभावं लक्षयति।

स्वभावतः साध्येन साधनस्य व्याप्तिरविनाभाव इति॥

विनाशब्द ऋतेवदभावार्थोऽव्ययम्। ततो विना भवनं विनाभावः न विनाभावोऽविनाभावो नान्तरीयकत्वमित्यर्थः। साध्यसाधनयोर्वक्ष्यमाणलक्षणयोः स्वभावादनुपाधियोगाद्या व्याप्तिर्नियमः सोऽविनाभावो भवति। कोऽर्थः। यत्र यत्र धूमादिस्तत्र तत्र वह्न्यादिरभावे न धूमादिरिति साध्यस्य वह्न्यादेर्यद्व्यापकत्वं सोऽविनाभाव इति। अत्र स्वभावत इति पदं सोपाधीनां हेतूनां प्रतिक्षेपार्थं तैः साध्यसिद्धेरयोगात्। तदुक्तम्।

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।

तैर्दृष्टैरपि नैष्टव्या व्यापकांशावधारणेति॥

ननूपाधिः किंलक्षणः क्व च भवतीति चेत् उच्यते। साधनाव्यापकः साध्येन समव्याप्तिकश्च खलूपाधिरभिधीयते। उपाधिर्द्विधा निश्चितः शङ्कितश्च। तत्र निश्चितोभयविशेषणवान्निश्चितो यथा खलु हिंसाऽधर्मो हिंसात्वात्। अत्र निषिद्धत्वं निश्चित उपाधिः। साध्यस्य व्याप्तत्वा साधनस्य चाव्याप्तत्वोपाधिविशेषणयोः साध्यव्यापकत्वसाधनाव्यापकत्वरूपयोर्निश्चितत्वात्। उक्तयोरेव

विशेषणयोरन्यतरसदसद्भावशङ्कायां तु शङ्कित उपाधिर्यथा स श्यामस्तत्पुत्रत्वादत्र शाकाद्याहारपरिणाम उपाधिस्तत्पुत्रत्वे शाकाद्याहारपरिणतेरभावानिश्चयात्साधनाव्यापकत्वं सन्दिग्ध-मिति। तस्मात्सोपाधिर्हेतुर्न श्रेयानिति स्वभावपदेनोच्यत इति ॥२॥

तद्भेदमाह।

स द्विविधोऽन्वयव्यतिरेकभेदादिति ॥

अस्तित्वमुखेन प्रतीयमाना व्याप्तिरन्वयः। नास्तित्वमुखेन प्रतीयमाना व्याप्तिर्व्यतिरेकः। तद्भेदात् स इत्यविनाभावो द्विधा भवति ॥ ३ ॥

अथान्वयाविनाभावं लक्षयति।

*साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वय इति ॥

अविवक्षितावान्तरविशेषं वह्निमात्रं यत्साध्यसामान्यं तेन कर्त्तृभूतेन अविवक्षितावान्तरविशेषं धूममात्रं यत्साधनसामान्यं तस्य कर्मभूतस्य या व्याप्तिर्नियमः सोऽन्वयाविनाभावो भवति। अत्र सामान्यपदं विशेषैः सह व्याप्तिप्रतिक्षेपार्थम्। विशेषेष्वनु-गमाभावेन व्याप्तेरयोगात्। न हि यः पार्श्वधूमवान् स पार्श्व-वह्निमानिति व्याप्तिरस्ति। दृष्टान्तेऽन्यजातीयसद्भावेन व्यभि-चारात्। न च वाच्यं विशेषेषु व्याप्त्यभावात् सामान्यव्याप्तौ सिद्धसाध्यत्वानुषङ्ग इति। व्याप्त्याग्निमात्रं संसाध्य नियतदेशे तदनु तत्साधनात्। अन्वयव्याप्तौ च साध्यसामान्यं व्यापकं

* The word "तत्र" is added in the text before the reading adopted here ( See p. 5. L. 3 ).

साधनसामान्यं व्याप्यम्। तत्र व्यापकं बहुविषयं व्याप्यं स्वल्पविषयम्। धूमाभावेऽप्यङ्गारावस्थायामग्निसद्भावात्। तदुक्तम्।

व्यापकं तदतन्निष्ठं व्याप्यं तन्निष्ठमेव च।

व्याप्यङ्गमकमादिष्टं व्यापकं गम्यमिष्यते॥ इति॥ ४॥

व्यतिरेकाविनाभावमाह।

साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेक इति॥

प्रागुक्तलक्षणसाधनसामान्याभावेन प्रागुक्तलक्षणसाध्यसामान्याभावस्य या व्याप्तिर्नियमः स व्यतिरेकाविनाभावो भवति। अत्राभावपदमन्वयाविनाभावातिव्याप्तिव्यपोहार्थम्। व्यतिरेकाविनाभावे च साध्यसामान्याभावो व्याप्यः साधनसामान्याभावश्च व्यापकः ततोऽन्वयाद्व्यतिरेकस्य वैपरीत्यं ज्ञेयम्। तदुक्तम्।

नियम्यत्वनियन्तृत्वे भावयोर्यादृशी मते।

विपरीते प्रतीयेते तएव तदभावयोः॥

साध्यं व्यापकमित्याहुः साधनं व्याप्यमुच्यते।

प्रयोगेऽन्वयवत्येवं व्यतिरेके विपर्य्ययः॥ इति॥ ५॥

साधनं लक्षयति।

साधनं लिङ्गमिति॥

अत्र साधनं लक्ष्यं लिङ्गमिति लक्षणम्। लिङ्ग्यते चिह्न्यते दूरतोऽपि लिङ्गी अनेनेति लिङ्गम्। यदनुमेयेनार्थेन देशविशेषे कालविशेषे वा सहचरितमनुमेयधर्म्मान्विते चान्यत्र सर्वस्मिन्नेकदेशे वा प्रसिद्धमनुमेयविपरीते च सर्व्वस्मिन् प्रमाणतोऽसदेव तद-

प्रसिद्धस्यार्थस्यानुमापकं लिङ्गम्। साध्यतेऽनेनेति साधनमुच्यते। तदुक्तम्।

अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते।

विपरीते च नास्त्येव तल्लिङ्गमनुमापकमिति॥ ६॥

तद्भेदावाह।

तद्द्विविधं दृष्टं सामान्यतो दृष्टञ्चेति॥

अत्र द्विविधपदमुक्तप्रकारावधारणार्थम्। महानसादौ दृष्ट-दहनादिसाजात्येन द्रष्टुं योग्ये साध्ये प्रवर्त्तमानं साधनं दृष्टमुच्यते। दृष्टार्थविषयत्वात्। व्याप्तिग्रहणक्षणे सामान्यवृत्त्या दृष्टस्यार्थस्य पश्चादनुमापकं यत्साधनं तत्सामान्यतो दृष्टमुच्यते।

यद्यपि सर्वं साधनं सामान्यतो दृष्टमेव तथापि दहनाद्यनु-मितौ धूमाद्यनुमापिते वह्न्यादेः प्रत्यक्षीकर्त्तुं योग्यत्वेन तद्विषय-त्वात् तत्साधनं दृष्टमेव। इतरत्तु तद्विपर्य्यस्ततया सामान्यतो दृष्टमिति। च शब्दः स्वार्थपरार्थभेदेनापि द्वैविध्यसूचनार्थः॥ ७॥

तत्र दृष्टसाधनमाचष्टे।

तत्र प्रत्यक्षयोग्यार्थानुमापकं दृष्टमिति॥

प्रत्यक्षग्रहणयोग्यः स चासावर्थश्च तस्यानुमापकं यत्साधनं तत् दृष्टं भवति। सामान्यतोदृष्टेऽतिव्याप्तिनिवृत्त्यै प्रत्यक्षयोग्येति पदम्। प्रत्यक्षग्रहणयोग्यतात्वत्र साध्यस्य दृष्टचरत्वेनानुमितेरनु द्रष्टुमौचित्येन वा ज्ञेया॥ ८॥

उदाहरति।

यथा धूमोऽग्नेरिति॥

दृष्टसजातीयस्य द्रष्टुं योग्यस्य वाग्नेरनुमापकत्वेन प्रवर्त्तमानो धूमो दृष्टं साधनं भवतीत्यर्थः ॥ ९ ॥

सामान्यतो दृष्टं साधनमाह।

स्वभावविप्रकृष्टार्थानुमापकं सामान्यतो दृष्टमिति ॥

स्वभावविप्रकृष्टार्थाः परमाण्वादयस्तेषां सामान्यव्याप्तेर्विशेषे पर्य्यवसानाद्यदनुमापकं लिङ्गं तत्सामान्यतो दृष्टं भवति। दृष्टसाधनेऽतिव्याप्तिव्यावृत्त्यै स्वभावविप्रकृष्टेति पदम् ॥ १० ॥

तन्निदर्शयति।

यथा रूपादिज्ञानं चक्षुरादेरिति ॥

चक्षुरादीन्द्रियमतिसूक्ष्मत्वात् स्वभावविप्रकृष्टम्। तच्च क्रिया करणपूर्व्विकेति सामान्यव्याप्त्या क्रियायाः करणपूर्वकत्वे सिद्धे रूपाद्युपलब्धिः करणसाध्या क्रियात्वात् छिदिक्रियावदिति सामान्यतो दृष्टाद्रूपादिज्ञानसाधनादन्यकरणासम्भवे सति पारिशेष्याच्चक्षुराद्यनुमीयत इति ॥ ११ ॥

पुनः साधनभेदमाह।

तत्पुनर्द्विविधं स्वार्थं परार्थञ्चेति ॥

दृष्टसामान्यतोदृष्टभेदात् द्विविधमपि साधनं पुनर्द्विभेदं भवति। कथमित्याह। स्वार्थमिति। स्वस्मै आत्मने इदं स्वार्थम्। कोऽभिप्रायः। महानसादौ भूयोदर्शनसहायेन प्रत्यक्षेण धूमधूमध्वजयोर्निश्चितव्याप्तिकस्य पुंसो लोचनगोचरीभवद्यत्साधनं दृष्टान्ताद्यं विनापि परोक्षं लिङ्गिनमवगमयति। तत् स्वस्यैव प्रतिपत्तिभूतत्वात् स्वार्थमित्युच्यते। परार्थमिति। परस्मै व्युत्पा-

ख्यायेदं परार्थम्। कोऽर्थः। यत्साधनं व्युत्पादकेन स्वयं साध्य-नान्तरीयकत्वेन निर्णीय पञ्चावयववाक्यप्रयोगेण प्रतिपाद्यमानं सन्दिग्धादीनां परोक्षमर्थं लक्षयति तत्परार्थमिति व्यपदिश्यते। न चात्र वाक्यादेव साध्यावगतिरनुमानस्य शाब्दत्वप्रसङ्गात्। किन्तु पञ्चावयववाक्यप्रतिपादितास्लिङ्गादेव।

ननु परार्थमनुमानमिति न सङ्गच्छते। यतो लिङ्गं वा लिङ्गसमुद्भूतं ज्ञानं वानुमानम्। न च तयोः क्वापि पारार्थ्यं प्रसिद्धमस्ति। अथानुमानाभिधायकस्य शब्दस्य पारार्थ्यादनुमानं परार्थत्वेन समर्थ्यते तर्हि प्रत्यक्षाभिधायकस्यापि शब्दस्य पारार्थ्यात्प्रत्यक्षमपि तथोच्यतामविशेषात्। तदुक्तम्।

ज्ञानाद्वा ज्ञानहेतोर्वा नान्यस्यास्त्यनुमानता।
तयोश्च न परार्थत्वं प्रसिद्धं लोकवेदयोः॥
वचनस्य परार्थत्वादनुमानपरार्थता।
प्रत्यक्षस्यापि पारार्थ्यं तत् द्वारं किं न कल्प्यते॥

अत्रोच्यते। न वयं शब्दस्य पारार्थ्यात्तदभिधेयमनुमानमपि परार्थमिति समर्थयेमहि किन्तु परार्थं यः पञ्चावयववाक्यप्रयोगस्तं लिङ्गप्रतीत्युत्पादकत्वेनानुमितिहेतुत्वादनुमानमित्याचक्ष्महे। न चैवं प्रत्यक्षस्यापि पारार्थ्यम्। घटः क्वास्तीति पृष्टे प्रत्यक्षोऽयमित्युत्तरस्य शाब्दकार्य्यत्वात्।

एतेन वाक्यस्य साक्षादनुमितिसाधनाभावादौपचारिकमनुमापकत्वं तस्य समर्थहेतुप्रतिपादनेनैव कृतार्थत्वादिति॥ १२॥

तत्र स्वार्थं समर्थयति।

परोपदेशानपेक्षं स्वार्थमिति॥

परोपदेशो वक्ष्यमाणलक्षणं पञ्चावयवं वाक्यम्। तदनपेक्षं यत्साधनं तत् स्वार्थं भवति। परार्थानुमानेऽतिव्याप्तिनिवृत्त्यर्थमत्र नञ्समासः। प्रतिपत्तुः पौनःपुन्यानुभूतचरलिङ्गलिङ्गिसाहचर्य्यस्मरणात् परोपदेशं विनापि निश्चिताविनाभावस्य साधनस्य दर्शनात् यत्साध्यविज्ञानं तदनुमानं स्वार्थमित्यर्थः॥ १३॥

परार्थं लक्षयति।

परोपदेशापेक्षं परार्थमिति॥

परोपदेशं पञ्चावयवप्रयोगं परप्रतिपत्तौ यत्साधनमपेक्षते तत् परार्थं भवति। यत्साधनं पञ्चावयवप्रयोगेन प्रतिपाद्यमानं सन्दिग्धविपर्य्यस्तादीनां साध्यविज्ञानं जनयति। तत्परार्थमनुमानं भवतीति तात्पर्य्यम्॥ १४॥

अथ परोपदेशं लक्षयति।

परोपदेशस्तु पञ्चावयववाक्यमिति॥

परो विपर्य्यस्तादिरुपदिश्यते प्रबोध्यते येन स परोपदेशः। पञ्चावयवा वक्ष्यमाणाः प्रतिज्ञादयः। सामान्यवाक्येऽतिप्रसक्तिनिषेधार्थमवयवेति पदम्। द्व्यवयवमेव त्र्यवयवमेव वाक्यमिति तथागतभाट्टमतप्रतिक्षेपार्थं पञ्चेति पदम्। सर्वं वाक्यं सावधारणमिति न्यायादन्यथानियतार्थप्रदर्शकत्वेन निराकाङ्क्षप्रवृत्तानियतार्थसिद्धे स्तदुच्चारणवैयर्थ्यात् पञ्चावयवमेव वाक्यं परोपदेशं भवति! पञ्चावयवं हि वाक्यं यावत्सु रूपेषु लिङ्गस्याविनाभावः साध्येन सह समाप्यते तावद्रूपं लिङ्गं प्रतिपादयत्परं प्रबोधयतीत्यर्थः॥ १५॥

परोपदेश: पञ्चावयवं वाक्यमित्युक्तमतस्तानेव पञ्चावयवान् व्यनक्ति ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति ॥

प्रतिज्ञादिपदानामर्थः स्वस्वस्थाने वक्ष्यते । प्रतिज्ञा च हेतुश्चेत्यादि द्वन्द्वः । अवयवा इति । अवयवा इव अवयवाः प्रतिज्ञादीनामुपचारेणावयवत्वात् । मुख्यवृत्त्या तु द्रव्यारम्भका एवावयवाः । अवयवा इत्युक्ते हस्तपादाद्यवयवेष्वतिव्याप्तिः स्यात्तन्निवृत्त्यर्थं प्रतिज्ञादीनि पदानि । प्रतिज्ञादीनां चावयवत्वं पञ्चावयवमहावाक्यापेक्षया ज्ञेयमन्यथा तेषामपि पदकदम्बात्मकेन वाक्यत्वादिति ॥ १६ ॥

प्रतिज्ञादयोऽवयवा इत्युक्तं तत्र यथोद्देशं प्राक् प्रतिज्ञां प्रज्ञापयति ।

तत्र प्रतिपिपादयिषया पक्षवचनं प्रतिज्ञेति ॥

तत्रेति निर्धारणार्थः । प्रतिज्ञायते परं प्रत्यङ्गीक्रियते इति प्रतिज्ञा । परं प्रति हेतुतः प्रतिपादयितुमिच्छा प्रतिपिपादयिषा सिसाधयिषा । तया हेतुभूतया वक्ष्यमाणस्वरूपः साध्यधर्मविशिष्टो धर्मी पक्षस्तस्य वचनं भणनं प्रतिज्ञा भवति । अत्र वचनं प्रतिज्ञेत्युक्ते यत्किञ्चिद्वचनं प्रतिज्ञा स्यात्तद्व्युदासार्थं पक्षेति पदम् । तथापि निगमनेऽतिव्याप्तिः स्यात्तस्यापि पक्षवचनत्वात् । तन्निवृत्त्यर्थं प्रतिपिपादयिषयेति पदम् । धातूनामनेकार्थत्वादत्र प्रतिपिपादयिषा सिसाधयिषात्वेन व्याख्येयान्यथा हेत्वादीनामपि प्रतिपिपादयिषया भणनात् प्रतिज्ञात्वापत्तिः स्यादिति ॥ १७ ॥

प्रतिज्ञामुदाहरति।

यथानित्यः शब्द इति॥

अत्र सूत्रकारेच्छावैचित्र्यात् विपर्यस्तनिर्देशेऽपि शब्दोऽनित्य इति प्रतिज्ञा विधेया। अन्यथा प्रागेवानुपन्यस्ते धर्मिणि कुड्याभावे चित्रमिवानित्यत्वन्निरालम्बं स्यात्।

ननु केवलहेतुनैव साध्यसिद्धौ प्रतिज्ञाप्रज्ञापनं व्यर्थम्। ततः साक्षात्पारम्पर्य्येण वा सिद्ध्यसम्भवात्। साक्षात्तावन्न किञ्चिद्वचनं साधनाङ्गम्। यस्मादिति

अर्थादर्थगतेः शक्तिः पक्षहेत्वभिधानयोः।

नार्थतो न तयोर्नास्ति स्वतः साधनसंस्थितिः॥

नापि पारम्पर्य्येण यतो हेतुवचो बहिरर्थाप्रामाण्याश्रयमशक्त-मपि साध्यसिद्धौ शक्तस्य धूमाद्यर्थस्य सूचकं भवति। प्रतिज्ञोक्तिः पुनः साध्यमेवाभिधत्ते न पुनः सिद्धम्। साध्यञ्च न गमकं व्यभिचारादतो न तत्सूचकं पारम्पर्य्येणापि। तदुक्तम्।

शक्तस्य सूचकं हेतुवचोऽशक्तमपि स्वयम्।

साध्याभिधानात् पक्षोक्तिः पारम्पर्य्येण नाप्यलम्॥ इति॥

नैवम्। न खलु यत्र क्वचन साध्यसाधनाय हेतुप्रयोगस्तस्य प्रागपि सिद्धत्वात्। किं तर्हि कस्मिंश्चित्प्रतिनियते धर्मिणि। तस्मिंश्चानुपन्यस्ते निराधारो हेतुः क्व प्रवर्त्तेत। तदप्रवृत्तौ साध्यासिद्धिरेव। ततो धर्मिग्राहकं प्रमाणं प्रगुणयन्त्या प्रतिज्ञया हेतोराधारः सन्निधाप्यत इति साध्यसिद्ध्यङ्गत्वात्प्रतिज्ञा स्वीकार्य्यैव। तस्याः प्रागपि सिद्धत्वाद्व्यर्थं तदुपादानमिति चेन्न।

तद्वाच्यस्य धर्मिणः स्वरूपेण सिद्धस्यापि प्रतिपाद्यधर्मविशिष्टत्वाप्रसिद्धस्य तेन रूपेण पक्ष्यमाणत्वसम्भवात्। पक्षधर्मतापि हेतोरित्थमेव। यदि केवलमेवानित्यत्वं साध्यते तदा शब्दधर्मस्य कृतकत्वस्यापक्षधर्मतैव स्यात्। शब्दे एव त्वनित्ये साध्ये नायं दोषः। तदुक्तम्।

स एव चोभयात्मायं गम्यो गमक एव च।

असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः॥ इति॥ १८॥

द्वितीयावयवं व्यनक्ति।

साधनत्वख्यापकं लिङ्गवचनं हेतुरिति॥

हिनोति गमयति लिङ्गलक्षणमर्थमिति हेतुः। येन लिङ्गस्य साध्यसिद्धौ पञ्चम्यन्तं तृतीयान्तं वा साधनत्वं साध्यनान्तरीयकत्वं ख्याप्यते तद्वचनं हेतुरित्युपचर्य्यते। मुख्यतस्तु लिङ्गमेव हेतुस्तस्यैव पक्षधर्मत्वादिसद्भावात्। वचनं हेतुरित्युक्ते यत्किञ्चिद्वचनं हेतुः स्यात्तन्निवृत्त्यै लिङ्गेति पदम्। उपनयेऽतिव्याप्त्यपनुत्त्यै साधनादिपदमिति॥ १९॥

पूर्व्वोक्तायां प्रतिज्ञायां हेतुमुदाहरति।

यथा तीव्रादिधर्म्मोपेतत्वादिति॥

तीव्रस्तीक्ष्णः। आदिशब्दान्मृदुमधुरादिधर्म्मपरिग्रहः। तदुपेतत्वं तद्वत्त्वम्। अयमर्थः। शब्दोऽनित्यः। कस्मात्तीव्रादिधर्म्मोपेतत्वात्। तीव्रादयो हि धर्म्माः शब्दस्यैव तान् हेतुं ब्रुवता सूत्रकृता किमुक्तम्। पक्षस्यैव धर्म्मो हेतुः कार्य्यो नान्यस्तस्य पक्षधर्म्मत्वाभावात्॥ २०॥

हेतुभेदमाह ।

स त्रिविधोऽन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति ॥

स पूर्व्वोक्तो हेतुस्त्रिविधः त्रिप्रकारो भवति । कथमित्याह । अन्वयव्यतिरेकीत्यादि । साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः । साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिर्व्यतिरेकस्तद्वान् हेतुरन्वयव्यतिरेकी । व्यतिरेकव्याप्तिरहितः केवलान्वयी । अन्वयव्याप्तिरहितः केवलव्यतिरेकी । चकारो मूलसूत्रोक्तपूर्व्ववदादिहेतुत्रैविध्यबोधनार्थः । पूर्व्ववदादीनां अन्वयव्यतिरेक्यादीनाञ्च नाम्नैव भेदो नत्वर्थेन न्यायसंग्रहे युक्त्यन्तरेण तथा व्याख्यानात् । तथाच तत्रत्या व्याख्या । अथवा पूर्व्ववदिति केवलान्वय्यनुमानम् । शेषवदिति केवलव्यतिरेकि । सामान्यतो दृष्टमिति अन्वयव्यतिरेकीति । कथं पूर्व्वशब्देनान्वयो व्यपदिश्यते । प्रागध्यवसीयमानत्वात् । न हि यावन्नाग्निभावे धूमभावोऽध्यवसीयते तावदग्न्यभावे धूमाभावो दृष्टोऽप्यध्यवसातुं शक्यते विध्यध्यवसायपूर्व्वकत्वात्तन्निषेधाध्यवसायस्य ।

पूर्व्वमेव विद्यते अन्वय एवास्ति यस्यानुमानस्य तत्पूर्व्ववत् । शेषो व्यतिरेकः स एवास्ति यस्य तच्छेषवत् । अन्वयव्यतिरेकयोः साधनाङ्गयोः सामान्येन यदनुमानं दृष्टं तत्सामान्यतो दृष्टमिति । तत्र कारणात् कार्य्यानुमानं पूर्व्ववत् । यथा वृष्टिर्भविष्यति तादृशाब्ददर्शनात् । कार्य्यात्कारणानुमानं शेषवत् । यथोपरि वृष्टिर्जज्ञे तादृशनदीपूरदर्शनात् ।

सामान्यतोदृष्टं यथा देशान्तरप्राप्तित्वादादित्यगत्यनुमानमिति। अन्वयव्यतिरेक्यादिपदेष्वन्वयव्यतिरेकावस्येति बहुव्रीहिणैव चरितार्थत्वे नित्ययोगख्यापनार्थं मत्वर्थीयोपादानम्। नित्ययोगेऽतिशायन इति वचनात्। अयमर्थः। लिङ्गस्यान्वयव्यतिरेकादिद्वारेण तत्त्रैविध्याभिधायकः शब्दोऽप्युपचारात् त्रिधा हेतुर्भवति।

ननु शब्दस्य हेतुत्वे स्वार्थप्रतिपादनाविनाभावित्वेन कश्चि हेत्वाभासो न स्यादिति चेत्। न। हेत्वाभासस्य लिङ्गदौष्ट्यादिमूलत्वात् शब्दस्य दोषाभाव एव ॥ २१ ॥

तत्रान्वयव्यतिरेकिणं हेतुं लक्षयति।

तत्र पञ्चरूपोऽन्वयव्यतिरेकीति ॥

त्रिषु हेतुषु मध्ये प्रपञ्चयिष्यमाणः पञ्चरूपो हेतुरन्वयव्यतिरेकी भवतीत्यर्थः ॥ २२ ॥

पञ्चरूपाणि दर्शयति।

रूपाणि तु पक्षधर्म्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वञ्चेति ॥

तु शब्देन पराभिमतं त्रैरूप्यं व्यपाकरोति। पक्षधर्म्मत्वादीनां त्रयाणामर्थः स्वधिगमः। अबाधितविषयत्वमिति। अबाधितः प्रत्यक्षादिप्रमाणाविरुद्धो विषयः साध्यार्थो यस्य स तद्भावस्तत्त्वम्। असत्प्रतिपक्षत्वमिति। न सन् प्रतिपक्षः साध्यत्वेन सह यस्य स तद्भावस्तत्त्वम्। एतेषां स्वरूपं स्वयमेव वक्ष्यति। पक्षधर्म्म-

त्वादीनि ततः पञ्चरूपाणि यस्मिन् हेतौ भवन्ति सोऽन्वयव्यतिरेकी भवति ॥ २३ ॥

आद्यं रूपं निरूपयति ।

तत्र साध्यधर्म्मविशिष्टो धर्मी पक्षस्तत्र व्याप्यवृत्तित्वं हेतोः पक्षधर्म्मत्वमिति ॥

तत्रेति निर्द्धारणम् । साध्यश्चासौ धर्म्मश्च साध्यधर्म्म इति कर्म्मधारयस्तत्पुरुषे हि धर्म्मिणि विप्रतिपत्त्यभावेन धर्म्मस्यैव साध्यत्वे धर्म्मे धर्म्मान्तरानुषङ्गः स्यात् । तेन विशिष्टीभूतो यो धर्मी पर्व्वतादिः सः ।

पक्ष्यते व्यक्तीक्रियतेऽर्थोऽनेनेति व्युत्पत्त्या पक्षो भवति । वैशिष्ट्यस्य द्विनिष्ठतया धर्मिण्याक्षिप्तेऽपि यत् धर्मिपदं तत्साक्षा-दाख्यातएव धर्मी पक्षो यथा स्यान्न पुनः सौगतमतवत् पारम्पर्यात्त इति प्रतिपत्त्यर्थम् । पक्षव्यवस्था त्वेवम् ।

ज्ञातव्ये पक्षधर्मत्वे पक्षो धर्म्यभिधीयते ।

व्याप्तिकाले भवेद्धर्मः साध्यसिद्धौ पुनर्द्वयमिति ।

तत्र पक्षे व्याप्य समन्तात्तमधिष्ठाय हेतोर्या वृत्तिः सा पक्षधर्मत्वं भवति । हेतोः समस्तपक्षव्यापकत्वं पक्षधर्मत्वमित्यर्थः ॥ २४ ॥

द्वितीयं रूपमाह ।

साध्यसमानधर्मा धर्मी सपक्षस्तत्र सर्वस्मिन्नेकदेशे वा हेतो-र्वृत्तिः सपक्षे सत्त्वमिति ॥

समानो धर्मो यस्यासौ समानधर्मा । द्विपदाद्धर्मादन्निति सूत्रेण बहुव्रीहिसमासान्तादन् । ततः साध्यपदेन सह तत्पुरुषः ।

ततः साध्येन सह यस्तुल्यधर्मा स सपक्षो भवति। तत्रेति सपक्षे समस्ते एकदेशे वा हेतोर्या वृत्तिः सा सपक्षे सत्त्वं भवति॥ २५॥

तृतीयं रूपं व्याचष्टे।

साध्यव्यावृत्तधर्मा धर्मी विपक्षः तत्र सर्वस्मिन् विपक्षे हेतोरवृत्तिर्विपक्षाद्व्यावृत्तिरिति॥

साध्याद्व्यावृत्तधर्मा साध्यव्यावृत्तधर्मा साध्यशून्य इत्यर्थः। स तादृशो विपक्ष इत्युच्यते। तत्र समस्तेऽपि विपक्षे हेतोरवृत्तिर्विपक्षाद्व्यावृत्तिर्भवति।

अत्र धर्मीति पदं व्यतिरेकदृष्टान्तं विनापि तदभावे तन्नेति वचनादेव व्याप्तिः सिद्ध्यतीति सुगतमतप्रतिक्षेपार्थम्। धर्मिणं विना वचनमात्रेण साध्यसिद्ध्यभावात्। अन्यथा वह्निसद्भावे धूमसद्भाव इति वचनादेव व्याप्तिसिद्धावन्वयदृष्टान्तस्याप्यनभ्युपगमप्रसङ्ग इति॥ २६॥

चतुर्थं रूपं समर्थयते।

प्रमाणाविरोधिनि प्रतिज्ञातार्थे हेतोर्वृत्तिरबाधितविषयत्वमिति॥

प्रमाणानि प्रत्यक्षादीनि तैरविरोधः प्रमाणाविरोधस्तद्वति प्रतिज्ञातार्थे नित्यत्वादिधर्म्मके शब्दादौ हेतोर्या वृत्तिः साऽबाधितविषयत्वं भवति। इदं च रूपं त्रैरूप्यवादिभिरवश्यमभ्युपगन्तव्यमन्यथा हेतोर्बाधवैधुर्यजर्जरत्वापातात्। अविनाभूतस्य हेतोः कथं बाध इति चेत्। यदि त्रैरूप्यमात्रमेवाविनाभावस्तदास्त्येव बाधो यथानुष्णोऽयमग्निः कृतकत्वादित्यस्यैव। अथान्यत् किञ्चिद-

विनाभावस्तदा त्रैरूप्यान्न किञ्चिदन्यदुक्तमिति हेतोर्बाध-स्तदवस्थ एव।

ननु प्रत्यक्षादिविरोधः किं पक्षस्य दोषः किं वा हेतोः। उच्यते। न पक्षस्य दोषोऽनुमेयस्य तादवस्थ्यात्। नापि हेतोः। स्वविषये तस्य सामर्थ्यात् विषयान्तरे सर्वस्यैवासामर्थ्यात्। किन्तु प्रतिपादयितुरिदं दूषणम् यः साधनमविषये प्रयुङ्क्ते। यदि प्रतिज्ञातार्थप्रतीतियोग्यताविरहः प्रतिज्ञातार्थप्रतिपादनयोग्यता-विरहश्च दोषोऽभिमतस्तदा कर्मकरणयोरपि स स्यादिति हेतोर्बाधविध्वंसार्थमबाधितविषयत्वमङ्गीकार्यमिति ॥ २७ ॥

पञ्चमं रूपं प्रपञ्चयति।

साध्यतद्विपरीतयोः साधनस्यात्रिरूपत्वमसत्प्रतिपक्षत्वमिति ॥

साध्यं शब्दादेर्नित्यत्वादिकं तद्विपरीतमनित्यत्वादिकं तयोः। साधनस्य कृतकत्वादेर्यत्पक्षधर्मत्वसपक्षेसत्त्वविपक्षाद्व्यावृत्तिलक्षण-त्रिरूपत्वराहित्यं तदसत्प्रतिपक्षत्वं भवति। विदुषा स्वसाध्य-साधनाय स हेतुर्न वक्तव्यो यः परस्यापि वदतस्तथैव त्रिरूपो भूत्वा परपक्षसिद्धेः कल्पते। यथा यद्वेदाध्ययनं तद्वेदाध्ययनपूर्वकं वेदाध्ययनत्वादिदानीन्तनवेदाध्ययनवत्। एतादृशो हेतुः परपक्षे त्रिरूपः स्यात्। यथा यद्वेदाध्ययनं तद् गुर्वध्ययनपूर्वकं वेदा-ध्ययनत्वादिदानीन्तनवेदाध्ययनवत् इति ॥ २८ ॥

अन्वयव्यतिरेकिणोऽवान्तरभेदावाह।

स द्विविधः सपक्षवृत्तिभेदादिति ॥

सपक्ष इति दृष्टान्तस्तत्र सर्वस्मिन्नेकदेशे वा या वृत्ति-स्तद्भेदात् सर्वसपक्षव्यापकसपक्षैकदेशव्यापकभेदादन्वयव्यतिरेकी द्विधा भिद्यत इत्यर्थः ॥ २८ ॥

तत्राद्यं भेदमुदाहरति।

तद्यथानित्यः शब्दः कार्य्यत्वादिति सर्वसपक्षव्यापक इति ॥*

अत्र शब्दस्यानित्यत्वे साध्येऽनित्यत्वाक्रान्तो यः स सर्वोऽपि सपक्षस्तत्र घटादौ सर्वत्र कार्य्यत्वमस्तीति असौ कार्य्यत्वहेतुः सर्वसपक्षव्यापकोऽन्वयव्यतिरेकी।

अनित्यत्वन्त्वत्र वस्तुत्वे सति कारणाधीनः स्वरूपनाशो विवक्षितस्तेन।

प्रागभावस्य नश्वरस्यापि कार्य्यत्वाभावेनासौ हेतुः सर्वसपक्ष-व्यापको न भवतीति न वाच्यम्। तस्य प्रागुक्तानित्यत्वलक्षण-त्वाभात्। तथा कार्य्यत्वमपि वस्तुत्वे सति कारणाधीनः स्वात्म-लाभस्तेन कार्य्यत्वेऽप्यनित्यत्वशून्येन प्रध्वंसेन प्रस्तुतहेतोर्नानैकान्ति-कत्वं तस्यावस्तुत्वादिति ॥ ३० ॥

द्वितीयं भेदमाह।

सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति सपक्षैक-देशवृत्तिरिति ॥

अत्र शब्दोऽनित्य इति प्राच्येव प्रतिज्ञा। सामान्यवत्त्वे सत्यस्मदादीत्यादि हेतुः। तत्रेन्द्रियग्राह्यत्वादित्युक्ते मनइन्द्रिय-

---

* The word सर्व्व in सर्व्वसपक्षव्यापकः is omitted in our text [ Vide p. 6. L. 13 ].

ग्राह्येण नित्येनात्मनानैकान्तिकत्वं स्यात्तन्निवृत्त्यै च बाह्येतिपदम्। तथापि योगिनां बाह्येन्द्रियग्राह्यैर्नित्यैः परमाणुभिर्व्यभिचार स्तदपनुत्त्यै अस्मदादीति पदम्। न च तेऽस्मदादिबाह्येन्द्रिय-ग्राह्याः। एवमप्यस्मदादिबाह्येन्द्रियग्राह्येण नित्येन सामान्येनाति-व्याप्तिस्तदपास्त्यै सामान्यवत्त्वे सतीति पदम्। न च सामान्ये-ऽन्यत्सामान्यं अनवस्थादोषस्यानुषङ्गात्। अत्र शब्दस्यानित्यत्वे साध्ये यावाननित्यः पक्षस्तावान् सर्वोऽपि सपक्षस्तत्र घटादावयं हेतुरस्ति सुखादौ नास्ति तस्यान्तःकरणवेद्यत्वात्। ततः सपक्षैकदेशवृत्ति-त्वं हेतोः। अनयोर्द्वयोरपि हेत्वोरन्वयव्यतिरेकित्वाद्व्यतिरेकः स्वयमभ्यूह्यः।

ननु पक्षे भागासिद्धत्ववत् सपक्षैकदेशवर्त्तित्वमपि हेतोर्दोष इति चेत्। न। भागासिद्धत्वे हेतोः स्वरूपमेव न स्यात् सपक्षैक-देशवृत्तित्वे तु को दोषः। किं स्वरूपहानिः साध्यासाधकत्वं वा। नाद्यः कल्पः पक्षधर्मत्वेनैव तस्य निर्णीतत्वात्। न द्वितीयोऽ-विनाभावेनैव तस्य व्यवच्छिन्नत्वात्। किञ्च यदि सपक्षैकदेश-वृत्तिरपि दोषस्तदा यस्य सर्वथा सपक्षएव नास्ति स केवल-व्यतिरेकी कथं प्रामाण्यसङ्कटमाटीकतेति यत्किञ्चिदेतत्॥ ३१॥

अथ केवलान्वयिनं लक्षयति।

*पक्षव्यापकः सपक्षवृत्तिरविद्यमानविपक्षः केवलान्वयी पूर्व-वद्विविध इति॥

---

* In our text the word "स्च" is added before the word पूर्ववद्द्विविधः ( Vide page 6. Line 16 ).

केवलान्वयीति शब्दार्थः पूर्ववत्। यो हेतुः पक्षं व्याप्नोति सपक्षे च वर्त्तते विपक्षो यस्य नास्त्येव स व्यतिरेकव्याप्त्यभावात् केवलान्वयीत्युच्यते। पक्षव्यापकः केवलान्वयीति कृते व्यतिरेकिणि अतिव्याप्तिस्तद्व्यवच्छित्त्यै सपक्षवृत्तिरिति पदम्। अन्वयव्यतिरेकिण्यतिप्रसक्तिप्रतिषिद्धैय अविद्यमानविपक्षेति पदम्। तथानुक्तमपि कालात्ययोपदिष्टत्वादिदोषापनुत्त्यै अबाधितविषयत्वासत्प्रतिपक्षत्वे सतीति विशेषणमिह केवलव्यतिरेकिणि च विज्ञेयम्। केवलान्वयीत्यनेन ये न विना केनचित् कस्यचिदभावो ह्यविनाभाव इति व्युत्पत्तिबलमवलम्बमाना व्यतिरेकव्याप्तिमेव मन्वते तान्निराचष्टे। अभावस्य भावपूर्वकत्वेन व्यतिरेकव्याप्तेरन्वयपूर्वकत्वात्। ततो विपक्षाद्व्यावृत्तिविकलचातूरूप्यशाली केवलान्वयीत्युक्तम्। स च पूर्ववदिति अन्वयव्यतिरेकिवत् सर्वसपक्षव्यापकसपक्षैकदेशवृत्तिभेदाद्द्वेधा भवति ॥ ३२ ॥

तत्राद्यं भेदमुदाहरति।

*तद्यथा विवादास्पदीभूतान्यदृष्टादीनि कस्यचित्प्रत्यक्षाणि प्रमेयत्वात् करतलादिवदिति सर्वसपक्षव्यापक इति ॥

पुण्यपापस्वर्गेश्वरादीनामदृष्टानां प्रत्यक्षत्वं मीमांसका न मन्वते। तान् प्रति नैयायिकोऽनुमानयति विवादेत्यादि। अत्रादृष्टादीनां प्रमेयत्वाद्धेतोः कस्यचिद् योग्यादेः प्रत्यक्षत्वं साध्यते।

---

* The reading adopted by the commentator here, differs somewhat from our text (See page 6. Line 18).

यथा करतलादीनि प्रमेयत्वात् कस्यचित्प्रत्यक्षाणि तथा अदृष्टादी-न्यपि योग्यादेः प्रत्यक्षाणि भवन्तीत्यर्थः । अयञ्च हेतुः समस्तवस्तु-स्तोमस्य प्रमेयत्वाक्रान्त्या सर्वसपक्षव्यापकस्तथा कस्यचित्प्रत्यक्षत्वे साध्ये अप्रत्यक्षस्य कस्यापि वस्तुनोऽभावादेवाविद्यमानविपक्षश्च केवलान्वयिनः प्रथमो भेदो ज्ञेयः ॥ ३३ ॥

द्वितीयं भेदमुदाहरति ।

सैव प्रतिज्ञा मीमांसकानामप्रत्यक्षत्वात् अस्मत्सुखादिवदिति सपक्षैकदेशवृत्तिरिति ॥

अत्र विवादास्पदीभूतान्यदृष्टादीनीत्यादि प्राच्येव प्रतिज्ञा-तानि मीमांसकानामप्रत्यक्षत्वादिति हेतुना कस्यचित्प्रत्यक्षाणि साध्यन्ते । यथास्मत्सुखानि मीमांसकानामप्रत्यक्षाण्यपि अस्मत्-प्रत्यक्षाणि तथादृष्टादीनि मीमांसकाप्रत्यक्षाणि कस्यचिद् योग्यादेः प्रत्यक्षाणि भवन्तीत्यर्थः । कस्यचित् प्रत्यक्षत्वस्य सर्वत्रापि विद्यमानत्वात् अविद्यमानविपक्षो घटादौ मीमां-सकानामप्रत्यक्षत्वस्य हेतोरभावात् सपक्षैकदेशवर्त्ती केवलान्वयिनो ऽयं द्वितीयो भेदः । मीमांसकानामप्रत्यक्षत्वन्त्वत्र मीमांसक-प्रत्यक्षातिरिक्तप्रमाणग्राह्यत्वं विवक्षितमन्यथा मीमांसकानां प्रत्यक्षत्वनिषेधेन तद्व्यतिरिक्तपुरुषप्रत्यक्षत्वस्य हेतुत्वे साध्यवैशिष्ट्यं स्यान्निषेधमात्रस्य च हेतुत्वे शशविषाणादिना व्यभिचारो भवेत्तस्य मीमांसकाप्रत्यक्षत्वेऽपि कस्यचिदप्रत्यक्षत्वात् । न च केवलान्वयी न प्रमाणमिति वाच्यम् । व्यतिरेकव्याप्त्यभावेऽपि तस्य प्रमाण-

प्रतिष्ठितत्वात् । तथाहि केवलान्वयी प्रमाणं सम्यगविनाभाव-बलेनार्थप्रतिपादकत्वात् । अन्वयव्यतिरेकिवदिति ॥ ३४ ॥

केवलव्यतिरेकिणं लक्षयति ।

पक्षव्यापकोऽविद्यमानसपक्षो विपक्षाद्व्यावृत्तः केवलव्यतिरेकीति ॥

यो हेतुः पक्षं व्याप्नोति यश्च सपक्षविकलो यश्च विपक्षाद्व्यावृत्तः स केवलव्यतिरेकी भवति । पक्षव्यापकः केवलव्यतिरेकीति लक्षणे कृते केवलान्वय्यादावतिव्याप्तिस्तन्निवृत्त्यै अविद्यमानसपक्षेतिपदम् । तथापि विरुद्धेऽतिव्याप्तिस्तदपोहार्थं विपक्षाद्व्यावृत्त इति पदम् । एतेन केवलव्यतिरेकी सपक्षे सत्त्वलक्षणैकरूपविकलचातूरूप्यभाग्भवतीत्युक्तम् ॥ ३५ ॥

केवलव्यतिरेकी द्वेधा प्रसङ्गोन्नेयी अप्रसङ्गोन्नेयी च । तत्र प्रागप्रसङ्गोन्नेयिनमाह ।

*यथा सर्वविर्त्कर्त्तृपूर्वकं सर्वं कार्य्यं कादाचित्कत्वात् । यत्सर्वविर्त्कर्त्तृपूर्वकं न भवति तन्न कादाचित्कं यथाकाशादीति ॥

यः सृष्टिमीश्वरकर्त्तृकां न मनुते तं प्रतीदमनुमानम् । अत्र क्षित्यादेः सर्वस्य कार्य्यस्य सर्वविर्त्कर्त्तृपूर्वकत्वं सर्वज्ञहेतुकत्वं साध्यं तत्र भगवतः सिसृक्षासञ्जिहीर्षाभ्यां भवनाभवनरूपं कादाचित्कत्वं व्यक्तमेव । यत्सर्वविर्त्कर्त्तृपूर्वकं न भवति तन्न

* The reading adopted by the commentator here differs somewhat from our text [ See page, 7, line 2-5 ].

कादाचित्कमिति साध्याभावपूर्वकः साधनाभावो व्यतिरेक-व्याप्तिः। आकाशादीति व्यतिरेकदृष्टान्तः।

अत्र सर्वस्य कार्य्यस्य पक्षीकृतत्वादेव सपक्षाभावादन्वयव्याप्ति-र्न भवत्येव।

ननूदकाद्याहरणकार्य्यस्यासर्व्वविदस्मदादिकर्तृपूर्व्वकस्य प्रत्यक्षे-णोपलम्भात्प्रत्यक्षबाधितः पक्ष इति चेन्न। तत्रापि तस्यापि सर्व्वविस्त्वादन्यथा यदि तत्तेन न ज्ञायेत तर्हि न क्रियेत क्रियाया ज्ञप्तिपूर्व्वकत्वात्।

न चैवं यत्किञ्चित्कर्तृपूर्व्वकं साध्यं स्याद्विपक्षे बाधक-सहितस्यैव केवलव्यतिरेकिणः साध्यसाधकत्वाभ्युपगमात्।

ततएव शशविषाणादिपूर्व्वकत्वमपि साध्यं निरस्तं ज्ञेयम्। तदभावे तदुत्पाद्यस्य कस्याप्यभावात्। सर्व्वविदभावे तु कार्य्य-वैचित्र्यमेव न स्यात्। एतेन केवलव्यतिरेकी तर्कसहित एव प्रमाणं भवतीत्युक्तम्। अन्वयाभावात् केवलव्यतिरेक्यप्रमाणमिति चेन्न। व्यतिरेकाभावे केवलान्वयिनोऽप्यप्रामाण्यप्रसङ्गात्। ततः केवलव्यतिरेकी प्रमाणमबाधितविषयत्वात् प्रतिपक्षत्वे सति सर्व्व-विपक्षाद्व्यावृत्तत्वादन्वयव्यतिरेकिवदिति॥ २६॥

प्रसङ्गोन्नेयिनमाह।

प्रसङ्गद्वारेण वा यथा नेदं निरात्मकं जीवच्छरीरमप्राणादि-मत्त्वप्रसङ्गाल्लोष्टवदितीति॥

प्रसङ्गशब्द एव द्वारमुपायस्तेन प्रसङ्गशब्दोपादानेनेत्यर्थः। इदमनुमानं नैरात्म्यवादिनं प्रति। यदि जीवतां शरीरं निरात्मकं

स्यात्तर्हि लोष्टवदप्राणादिमद्भवेदप्राणादिमत्त्वेन लोष्टस्य निरात्मकस्य दर्शनादिति तात्पर्य्यार्थः ।

जीवदिति पदं शवत्वपरिहारार्थम् । प्रयोगस्त्वित्यम् । इदं जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यन्न सात्मकं तन्न प्राणादिमद्यथा लोष्टमिति ॥ ३७ ॥

अधुना सम्यग्घेतुस्वरूपप्रतिपत्त्यै हेत्वाभासान् व्याचिख्यासुस्तान् प्रस्तावयति ।

एतेन हेत्वाभासानामहेतुत्वमुक्तं भवतीति ॥

एतेन हेतुस्वरूपभणनेन हेत्वाभासानामहेतुत्वमुक्तम् । हेतुलक्षणरहितत्वादिति भावः ॥ ३८ ॥

तेषां लक्षणमाह ।

हेतुलक्षणरहिता हेतुवदवभासमाना हेत्वाभासा इति ॥

हेतुलक्षणं प्रागुपवर्णितं पाञ्चरूप्यं चातूरूप्यं वा । तेन विकलाः पञ्चम्यन्तत्वेन तृतीयान्तत्वेन वा हेतुवत् स्फुरन्तोऽर्थाद्धेतवो हेत्वाभासा भवन्तीत्यर्थः । हेत्वाभासा इति लक्षणे कृते साकाङ्क्षं वचस्तन्निवृत्त्यर्थं हेतुवदवभासमाना इति पदम् । सम्यग्घेतावतिव्याप्तिच्छिदे हेतुलक्षणरहिता इति पदम् ।

हेतुलक्षणरहितत्वं तु हेतुव्यतिरिक्ते सर्व्वत्राप्यस्तीति तत्र हेत्वाभासत्वभिदे हेतुवदवभासमाना इति पदम् ॥ ३९ ॥

अथ तान्नाम्ना सामान्यं निर्दिशति ।

*असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमा इति ॥

असिद्धश्च विरुद्धश्चेत्यादिद्वन्द्वः। एषां पदार्थो निजलक्षणे वक्ष्यते। असिद्धादिनामानः षट् हेत्वाभासा भवन्तीत्यर्थः ॥ ४० ॥

असिद्धं लक्षयति।

तत्रानिश्चितपक्षवृत्तिरसिद्ध इति ॥

तत्रेति षट्सु हेत्वाभासेषु। सिद्ध्यति यः स सिद्धो न सिद्धोऽसिद्धः। अनिश्चिता सन्दिग्धा विप्रतिपन्ना वा पक्षे वृत्तिर्यस्य स हेतुरसिद्धनामा हेत्वाभासो भवति। पक्षवृत्तिरसिद्ध इत्युक्ते सम्यग्घेतावप्यसिद्धत्वं स्यात्तन्निवृत्त्यै अनिश्चितेति पदम्। यस्य हेतोः पक्षधर्म्मत्वं सन्दिग्धं सोऽसिद्ध इत्यर्थः ॥ ४१ ॥

विरुद्धं लक्षयति।

†पक्षविपक्षयोरेव वर्त्तमानो विरुद्ध इति ॥

साध्यं विरुणद्धीति विरुद्धः। यो हेतुः सपक्षे सत्यसति वा पक्षे विपक्षे एव च प्रवर्त्तते स विरुद्धनामा हेत्वाभासो भवति। पक्ष एव वर्त्तमानो विरुद्ध इत्युक्तेऽनध्यवसितेऽपि विरुद्धत्वं स्यात्तदपोहाय विपक्षेति पदम्। एवकारः सपक्षव्यावृत्तिपक्षविपक्षप्रवृत्तिप्रतिपत्त्यर्थः ॥ ४२ ॥

---

* The reading "ते चानेकप्रकाराः" is added in our text before the reading adopted by the commentator here [ See p 7. L 9 ].

† In our text the word "हेतुः" is added before the word "विरुद्धः" ( See p. 7. Line 11 ).

अनैकान्तिकं प्रकटयति ।

पक्षसपक्षविपक्षवृत्तिरनैकान्तिक इति ॥

एकस्मिन्नन्ते साध्ये नियत ऐकान्तिकस्तद्विपर्य्यस्तोऽनैकान्तिको यो हेतुः पक्षत्रयं व्याप्नोति सोऽनैकान्तिको भवति। पक्षवृत्तिरिति कृतेऽनध्यवसितत्वं स्यात्तन्निवृत्त्यै सपक्षेति पदम्। सम्यग्घेतावतिव्याप्तिव्यवच्छित्त्यै विपक्षेति पदम् ॥ ४३ ॥

अनध्यवसितं प्रकाशयति ।

साध्यासाधकः पक्ष एव वर्त्तमानोऽनध्यवसित इति ॥

यो हेतुः सपक्षविपक्षयोः सतोरसतोर्वा न भवति । केवलं पक्षं व्याप्नोति स सजातीयविजातीयव्यावृत्तित्वेनानिश्चितोऽनध्यवसितनामको हेत्वाभासो भवति। पक्ष एव वर्त्तमान इत्युक्ते केवलव्यतिरेक्यप्यनध्यवसितः स्यात्तदपास्तुं साध्यासाधक इति पदम् ॥ ४४ ॥

कालात्ययापदिष्टमाचष्टे ।

प्रमाणबाधिते पक्षे वर्त्तमानो हेतुः कालात्ययापदिष्ट इति ॥

प्रमाणानुपहतपक्षोपन्यासानन्तरं हेतूपन्यासस्य समयः कालस्तदत्यये तदतिक्रमे सत्यपदिष्टः कालात्ययापदिष्टः प्रत्यक्षादिप्रमाणबाधिते पक्षे यो हेतुर्वर्त्तते स कालात्ययापदिष्टो भवति । सम्यग्घेतोः कालात्ययापदिष्टत्वनिवृत्त्यर्थं प्रमाणबाधितेति पदम् ॥ ४५ ॥

प्रकरणसमं लक्षयति ।

स्वपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसम इति ॥

प्रकरणे पक्षे प्रतिपक्षे च विशेषानुपलम्भात् समः प्रकरण-समः। समत्वं तु पक्षधर्मत्व-सपक्षेसत्त्व-विपक्षाद्व्यावृत्तिलक्षण-त्रैरूप्येण विज्ञेयम्। यो हेतुः स्वपक्षपरपक्षयोः साधनाय त्रैरूप्य-वान् स प्रकरणसमो भवति।

ननु यदि प्राक्तनस्य हेतोर्यथोक्तलक्षणत्वमवगतं तदा तेन योऽर्थः समर्थितः स तथैवेति न द्वितीयस्य प्रयोगः प्राप्नोति प्रतिपत्तिबाधितत्वात्।

अथ प्राक्तनो यथोक्तलक्षणो न भवति तदानीमसिद्धत्वादि-दोषः स्यान्न प्रकरणसमत्वमिति चेन्न। साध्यतद्विपरीते प्रति त्रैरूप्यवत्तया साध्यासाधकत्वेन तस्य हेत्वाभासत्वात्। स चा-सिद्धादिभ्यः पृथगेवानिश्चितपक्षवृत्तित्वादिलक्षणानाक्रान्तत्वा-दिति ॥ ४६ ॥

संप्रत्येषां कतिपयनिदर्शननिदर्शनार्थं कार्त्स्न्येन वक्तुमशक्यत्व-मावेदयति।

यद्यपि चैषां सूक्ष्मा भेदा अनन्तत्वान्न शक्यन्ते वक्तुं तथापि स्थूलां दृष्टिमाश्रित्य कियन्तो भेदाः प्रदर्श्यन्त इति॥

आनन्त्यात्सर्वभेदान् वक्तुमपदिष्टतया शिष्यशेमुषीवृद्धैर कति-पयान् भेदान् निदर्शयिष्यामीति भावः॥ ४७ ॥

तत्रासिद्धभेदानाह।

असिद्धभेदास्तावत्। स्वरूपासिद्धो यथानित्यः शब्दः चाक्षुष-त्वादिति॥

स्वरूपेणासिद्धः स्वरूपासिद्धः। अत्र शब्दस्यानित्यत्वे साध्ये

चाक्षुषत्वं स्वरूपेणासिद्धं शब्दस्याचाक्षुषत्वात्। हेतुश्च निश्चित-धर्म्मिधर्म्मत्वेन प्रसिद्ध एव गवेष्यते ॥ ४८ ॥

द्वितीयं भेदमाह।

व्यधिकरणासिद्धो यथानित्यः शब्दः पटस्य कृतकत्वादिति ॥

पक्षादिसदृक्षमधिकरणं यस्यासौ व्यधिकरणः व्यधिकरणश्चा-सावसिद्धश्चेति व्यधिकरणासिद्धः। पक्षव्यतिरिक्ताधार इत्यर्थः। अत्र पटस्य कृतकत्वे शब्दस्य किमायातं नह्यन्यकृतकत्वेनान्योऽनित्यो भवति। चैत्रभुक्तौ मित्रस्य तृप्तिप्रसङ्गात् ॥ ४९ ॥

तृतीयं भेदं भणति।

विशेष्यासिद्धो यथानित्यः शब्दः सामान्यवत्त्वे सति चाक्षुष-त्वादिति ॥

विशेष्येण चाक्षुषत्वलक्षणेनासिद्धो विशेष्यासिद्धः। यद्यपि चाक्षुषत्वं शब्दे स्वरूपत एवासिद्धं तथाप्यत्र विशेष्यतया तदुपा-दानाद्विशेष्यासिद्धत्वं हेतोः। सामान्यं चाक्षुषमस्ति न च तदनित्यं तद्व्यवच्छेदार्थं सामान्यवत्त्वे सतीति पदग्रहणम् ॥ ५० ॥

चतुर्थं भेदं समर्थयति।

विशेषणासिद्धो यथानित्यः शब्दश्चाक्षुषत्वे सति सामान्यव-त्त्वात् ॥

चाक्षुषत्वे सतीति विशेषणेनासिद्धो विशेषणासिद्धः। सामान्यवत्त्वादिति पदं प्राग्वत् ॥ ५१ ॥

पञ्चमं भेदं प्रपञ्चयति।

भागासिद्धो यथानित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति ॥

भागे पक्षैकदेशेऽसिद्धो भागासिद्धः। प्रयत्नः शब्दजनको व्यापारस्तदनन्तरं भवः प्रयत्नानन्तरीयकस्तद्भावात्। कः प्रयत्नः शब्दोत्पत्ताविति चेत्। उच्यते।

शब्दो वर्णावर्णात्मकतया द्वेधा। अकारादिर्वर्णात्मकस्तदितरः शङ्खादिहेतुरवर्णात्मकः। तत्र वर्णात्मकस्योत्पत्तिरेवम्। आत्ममनसोः संयोगात् स्मृत्यपेक्षा वर्णोच्चारणेच्छास्तदनु प्रयत्नस्तमपेक्ष्यमाणादात्मवायुसंयोगाद्वायुकर्म्म स चोर्द्धं गच्छन् कण्ठादीनभिहन्ति। ततः स्थानवायुसंयोगापेक्षात् स्थानाकाशसंयोगात् वर्णोत्पत्तिः। अवर्णात्मकस्तु भेरीदण्डसंयोगाद्यपेक्षाद्भेर्याकाशसंयोगाद्वेणुपर्वविभागापेक्षात्पर्वाकाशविभागाच्चोत्पद्यते इति। ईदृशं प्रयत्नानन्तरीयकत्वमाद्य एव शब्दे विद्यते न द्वितीयतृतीयशब्दादौ तेषां शब्दजत्वात्।

तथाच प्रशस्तपादभाष्यम्। "शब्दाच्च संयोगविभागनिष्पन्नाद्वीचीसन्तानवच्छब्दसन्तान इति"। यथा जलवीच्यास्तदव्यवहिते देशे वीच्यन्तरमुपजायते ततोऽन्यत्ततोऽप्यन्यदित्यनेन क्रमेण वीचीसन्तानो भवति। तथा शब्दादुत्पन्नात्तदव्यवहिते देशे शब्दान्तरं ततोऽन्यत्ततोऽप्यन्यदित्यनेन क्रमेण शब्दसन्तानो भवतीत्यर्थः।

शब्दात्कथं शब्दोत्पत्तिरिति चेत्। श्रोत्रशब्दयोर्निष्क्रियत्वेन गमनागमनाभावादिन्द्रियाणां प्राप्यकारित्वात् प्रकारान्तरेण चानुपलम्भाद्वीचीसन्ताने स्वोत्पत्तिदेशे विनश्यन्तीनामपि वीचीनां स्वासन्नदेशे स्वसदृशकार्य्यारम्भपरम्परयान्यदेशप्राप्तिदर्शनाच्छब्दोत्पन्नः शब्दसन्तानः परिकल्प्यते। न चानवस्था यावन्निमित्त-

कारणभूतकोष्ठवातानुवर्त्तनं शब्दसन्तानोपलम्भात् । अतएव प्रतिवातं न शब्दोपलम्भः । कोष्ठवायुप्रतिघातादिति ॥ ५२ ॥

षष्ठं भेदं व्याचष्टे ।

आश्रयासिद्धो यथास्ति प्रधानं विश्वपरिणामित्वादिति ॥

आश्रयेणासिद्धः आश्रयासिद्धः । सांख्यमते इदं विश्वं प्रधानात्मकं प्रधानं च सुखदुःखमोहस्वभावानां सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरुच्यते । प्रधानस्य स्वरूपं चैतत् ।

त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।

व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥

विश्वं परिणामोऽस्त्यस्य विश्वपरिणामि तद्भावस्तत्त्वं तस्माद्विश्वपरिणामित्वाद्धेतोरस्य प्रधानस्यास्तित्वं यदा सांख्येन साध्यते तदा नैयायिकमते तस्यासिद्धत्वात् तन्निष्ठो हेतुराश्रयासिद्धः स्यादिति ॥ ५३ ॥

सप्तमं भेदमभिधत्ते ।

आश्रयैकदेशासिद्धो यथा नित्याः प्रधानपुरुषेश्वरा अकृतकत्वादिति ॥

अत्र पक्षीकृतानां प्रधानादीनां मध्ये प्रधानस्यैकदेशस्य नैयायिकमते असिद्धत्वादाश्रयैकदेशासिद्धत्वं हेतोः ॥ ५४ ॥

अष्टमं भेदं व्याचष्टे ।

व्यर्थविशेष्यासिद्धो यथानित्यः शब्दः कृतकत्वे सति सामान्यवत्त्वादिति ॥

व्यर्थविशेष्यश्चासावसिद्धश्चेति विग्रहः । अत्र शब्दस्य कृतक-

त्वेनैवानित्यत्वसिद्धौ सामान्यवत्त्वमिति विशेष्यं व्यर्थम् । अतो-त्तरत्र च व्यर्थमिति पदं विशेष्यासिद्धविशेषणासिद्धव्यवच्छेदार्थम् ॥ ५५ ॥

नवमं भेदं भणति ।

व्यर्थविशेषणासिद्धो यथा अनित्यः शब्दः सामान्यवत्त्वे सति कृतकत्वादिति ॥

व्यर्थविशेषणश्चासावसिद्धश्चेति समासः । अत्रापि सामान्य-वत्त्वमिति विशेषणं व्यर्थम् । इह पूर्व्वत्र च कृतकत्वस्यासिद्धत्वं नित्यत्ववाद्यपेक्षयान्यथा व्यर्थविशेष्यत्वं व्यर्थविशेषणत्वं च स्यान्न-त्वसिद्धत्वमिति ॥ ५६ ॥

दशमं भेदं दिशति ।

*सन्दिग्धासिद्धो यथा धूमवाष्पादिविवेकानिश्चये कश्चिदाहा-ग्निमानयं प्रदेशो धूमवत्त्वादिति ॥

किमयं धूमो बाष्पो वेत्येवं साधनेऽनिश्चिते सत्यत्र प्रयुक्तं धूमवत्त्वं हेतुः सन्दिग्धासिद्धो भवति । एतेन साधनं निश्चितमेव प्रयोक्तव्यं नान्यथेत्युक्तम् ॥ ५७ ॥

एकादशं भेदं प्रकाशयति ।

सन्दिग्धविशेष्यासिद्धो यथाद्यापि रागादियुक्तः कपिलः पुरुषत्वे †सत्यद्याप्यनुत्पन्नतत्त्वज्ञानत्वादिति ॥

---

* The reading adopted by the commentator here differs somewhat from the text ( See page 8, Line 11 ).

† The word अद्यापि is omitted in the text ( See p 8, L 14 ).

अत्र कपिलस्य रागादियुक्तत्वं साध्यम्। कपिलोऽपि कर्हिचिन्नीरागः स्यात्ततः सिद्धसाध्यत्वं भवेत्तदपोहार्थं पक्षेऽव्यापीति पदम्। घटादिना व्यभिचारनिवृत्त्यै पुरुषत्वे सति पदम्। तथानुत्पन्नतत्त्वज्ञानत्वादित्युक्ते महायोगिनामनुत्पन्नतत्त्वज्ञानत्वेऽपि नीरागत्वात्तैर्व्यभिचारः स्यात्तन्निवृत्त्यै हेतावप्यव्यापीति पदम्। अत्रानुत्पन्नतत्त्वज्ञानत्वं विशेष्यं सन्दिग्धं को वेदाद्यापि कपिल उत्पन्नतत्त्वज्ञानोऽन्यथा वेति सन्दिग्धविशेष्यासिद्धो हेतुः॥ ५८॥

द्वादशं भेदं व्यनक्ति।

सन्दिग्धविशेषणासिद्धो यथाद्यापि रागादियुक्तः कपिलः सर्व्वदा तत्त्वज्ञानरहितत्वे सति पुरुषत्वादिति॥

अत्राप्यव्यापीति प्राग्वत्। तत्त्वज्ञानरहितत्वस्य कादाचित्कत्वे रागादियुक्तत्वं न सिद्धेदिति सर्व्वदेति पदम्। अत्र सर्व्वदा तत्त्वज्ञानरहितत्वं विशेषणं सन्दिग्धम्। को वेद कपिलः सर्व्वदा तत्त्वज्ञानरहितोऽन्यथा वेति॥ ५९॥

ननु परैरुभयासिद्धान्यतरासिद्धतयाऽसिद्धस्य द्वैविध्यमभिहितं तदत्र कस्मान्नोच्यत इत्याह।

*एतेऽसिद्धभेदा यदोभयवाद्यसिद्धत्वेन विवक्षितास्तदोभयासिद्धा भवन्ति। यदात्वन्यतरवाद्यसिद्धत्वेन विवक्षितास्तदान्यतरासिद्धा भवन्तीति॥

---

* The commentator his not given examples of विरुद्धविशेष्यासिद्ध and विरुद्धविशेषणासिद्ध which are mentioned in the text ( See page 8, Line 16-19 ).

प्रागुक्ता एते द्वादशासिद्धभेदा अनित्यः शब्दः चाक्षुषत्वादित्यादिवद्यदा वादिप्रतिवादिनोरसिद्धत्वेन वक्तुमिष्टास्तदोभयासिद्धा भवन्ति। यदा तु वादिप्रतिवादिनोरेकतरासिद्धत्वेन मीमांसकं प्रति शब्दोऽनित्यः कृतकत्वादित्यादिवद्भिर्भणिषितास्तदान्यतरासिद्धा भवन्तीत्यर्थः। अनयोर्मध्ये अन्यतरासिद्धः प्रतिकार्य्यो भवति। हेत्वन्तरेण तस्य साधयितुं शक्यत्वात्। तदुक्तम्।

योऽपि तावत् स्वयं सिद्धः परासिद्धोऽभिधीयते।

भवेत्तत्र प्रतीकारः ततोऽसिद्धेऽपि का क्रिया॥ ६०॥

एवं द्वादशासिद्धभेदानभिधाय विरुद्धभेदानाह।

विरुद्धभेदास्तु सति सपक्षे चत्वारो विरुद्धाः। पक्षविपक्षव्यापको यथा नित्यः शब्दः कार्य्यत्वादिति॥

विरुद्धभेदा उच्यन्ते इति शेषः। तु शब्दोऽसिद्धाद्विरुद्धव्यवच्छेदकः। विरुद्धभेदास्तु सपक्षे सत्यसति च भवन्ति। ततः प्राक् प्राचो भेदान् व्याचष्टे सति सपक्षे इत्यादि। अत्र कार्य्यत्वलक्षणो हेतुः पक्षे शब्दे विपक्षे घटादौ च वर्त्तते। आत्मादौ सपक्षे सत्यपि न वर्त्तत इति विरुद्धो हेतुः। कार्य्यत्वं तु प्रागसतः सत्तासमवायः। तच्च प्रध्वंसादिषु नास्तीति कार्य्यत्वहेतोर्विरुद्धत्वमेवान्यथाकारणात् स्वात्मलाभः कार्य्यत्वमिति कार्य्यत्वलक्षणे कृते प्रध्वंसादिषु तत्सत्त्वेनानैकान्तिकत्वं स्यात्॥ ६१॥

द्वितीयं भेदमाह।

विपक्षैकदेशवृत्तिः पक्षव्यापको यथा नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादिति॥

अत्र बाह्येन्द्रियग्राह्यत्वादित्युक्ते योगिबाह्येन्द्रियग्राह्यैः परमाणुभिः सपक्षवृत्तित्वाद्विरुद्धत्वं न स्यादित्यस्मदादिग्रहणम्। अस्मदादिबाह्येन्द्रियग्राह्यत्वं सामान्येऽप्यस्तीति सामान्यवत्त्वे सतीति पदम्। अयं हेतुर्विपक्षे घटादावस्ति सुखादौ नास्ति तस्यान्तःकरणग्राह्यत्वादिति विपक्षैकदेशवर्त्ती॥ ६२॥

तृतीयं भेदं व्यनक्ति।

पक्षविपक्षैकदेशवृत्तिर्यथा। नित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति॥

पक्षीकृतेषु सर्व्वशब्देषु आद्ये एव शब्दे प्रयत्नानन्तरीयकत्वं प्रयत्नतारतम्यानुविधायित्वमस्ति न द्वितीयतृतीयादिशब्देषु तेषां शब्दजत्वादिति पक्षैकदेशवृत्तित्वं हेतोः। तथा विपक्षे घटादौ सद्भावात् तृणादावसद्भावाच्च विपक्षैकदेशवृत्तित्वं चेति॥ ६२॥

चतुर्थं भेदं समर्थयते।

पक्षैकदेशवृत्तिर्विपक्षव्यापको यथा नित्या पृथिवी कृतकत्वादिति॥

पृथिवी द्विधा परमाणुकार्य्यरूपभेदात्। तथाच प्रशस्तपादभाष्यम्। सा द्विधा नित्या चानित्या च। परमाणुलक्षणा नित्या कार्य्यलक्षणात्वनित्येति।

तत्र परमाणुरूपायां पृथिव्यां कृतकत्वं नास्ति कार्य्यरूपायामस्तीति पक्षैकदेशवृत्तित्वम्। विपक्षेऽनित्ये सर्व्वत्रापि कृतकत्वमस्त्येव। एषु चतुर्ष्वपि भेदेषु आत्मादौ नित्ये सपक्षे सत्यपि हेत्ववृत्तिर्व्यक्तेति॥ ६४॥

सति सपक्षे चतुरो विरुद्धभेदानभिधायासति सपक्षे तानाह ।

असति सपक्षे चत्वारो विरुद्धाः । पक्षविपक्षव्यापको यथा आकाशविशेषगुणः शब्दः प्रमेयत्वादिति ॥

सपक्षेऽसति चत्वारो विरुद्धभेदा अभिधीयन्त इति वाक्योपस्कारः । अत्राकाशविशेषगुणत्वं साध्यं तच्च शब्दव्यतिरिक्तेऽन्यत्र क्वापि नास्तीति सपक्षाभावः । एवमुत्तरेषु त्रिष्वपि हेतुषु ज्ञेयम् । हेतोः पक्षविपक्षव्यापकत्वं प्रतीतमेव ॥ ६५ ॥

द्वितीयं भेदं भणति ।

पक्षविपक्षैकदेशवृत्तिर्यथा । आकाशविशेषगुणः शब्दः प्रयत्नानन्तरीयकत्वादिति ॥

प्रयत्नानन्तरीयकस्य हेतोः पक्षे प्रथमशब्दे सद्भावाच्छब्दजशब्देष्वसद्भावात् आकाशविशेषगुणव्यतिरिक्ते विपक्षे घटादावस्तित्वादात्मादावनस्तित्वाच्च पक्षविपक्षैकदेशवृत्तित्वम् ॥ ६६ ॥

तृतीयं भेदं व्याचष्टे ।

पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा आकाशविशेषगुणः शब्दो बाह्येन्द्रियग्राह्यत्वादिति ॥

ग्राह्यत्वं ग्रहणयोग्यत्वं तत्पक्षीकृतेषु सर्वेष्वपि शब्देष्वस्तीति पक्षव्यापकत्वं विपक्षे आकाशविशेषगुणत्वव्यतिरिक्ते घटादौ बाह्येन्द्रियग्राह्यत्वमस्ति सुखादौ नास्ति इति विपक्षैकदेशवृत्तित्वम् ॥ ६७ ॥

चतुर्थभेदमभिदधाति ।

विपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा आकाशविशेषगुणः शब्दोऽपदात्मकत्वादिति॥

शब्दो द्विधा पदात्मकोऽपदात्मकश्चेति। पदं तु सुप्तिङन्तम्। तत्रापदात्मकत्वं भेर्य्यादिशब्देष्वस्ति न तदितरेष्वपि इति पक्षैकदेशवृत्तित्वम्। विपक्षे आकाशविशेषगुणव्यतिरिक्ते सर्व्वत्रापदात्मकत्वं व्यक्तमस्तीति विपक्षव्यापकत्वम्॥ ६८॥

ननु ये पक्षव्यापकास्त एव विरुद्धभेदा। न पक्षैकदेशवृत्तय इति परं शङ्कते।

ननु चत्वार एव विरुद्धभेदा नान्ये तेषामसिद्धलक्षणोपपन्नत्वादिति॥

ये सकलं पक्षमनुवन्ति त एव विरुद्धभेदा भवन्ति। नान्ये पक्षैकदेशवृत्तयस्तेषामसिद्धलक्षणोपपन्नत्वादनिश्चितपक्षवृत्तित्वेन असिद्धत्वं विरुद्धत्वञ्च मिथो विरुद्धमेकस्य न स्यादिति तात्पर्य्यार्थः॥ ६९॥

परिहरति।

नैष दोष उभयलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात् तुलायां प्रमाणप्रमेयव्यवहारवदिति॥

असिद्धविरुद्धलक्षणोपपन्नत्वेनोभयव्यवहारविषयत्वात् एष त्वदुक्तो दोषो न भवतीत्यर्थः। अत्र दृष्टान्तं स्पष्टयति तुलायामिति। यथा एकैव तुला हेमादिद्रव्येयत्ताहेतुत्वात्प्रमीयते अनयेति प्रमाणं भवति। इयं शुद्धाशुद्धा वेति यदा परीक्ष्यते तदा

प्रमाविषयत्वात् सैव प्रमेयं भवति। तद्वदेषामप्युभयव्यवहार-विषयत्वमिति ॥ ७० ॥

इत्थं विरुद्धभेदानष्टौ स्पष्टीकृत्य संप्रत्यनैकान्तिकभेदानाह ।

अनैकान्तिकभेदास्त्विति। पक्षत्रयव्यापको यथानित्यः शब्दः प्रमेयत्वादिति ॥

तु शब्दो विरुद्धादनैकान्तिकभेदार्थः। अनैकान्तिकभेदा उच्यन्ते इति वाक्यशेषः। प्रमेयत्वं पक्षे विपक्षे सपक्षे चास्तीति पक्षत्रयव्यापकत्वम् ॥ ७१ ॥

द्वितीयं भेदं भणति ।

पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथानित्यः शब्दः प्रत्यक्ष-त्वादिति ॥

अत्र प्रत्यक्षत्वमस्मदादीन्द्रियग्रहणयोग्यत्वं विवक्षितमन्यथा योगिप्रत्यक्षत्वेन पक्षत्रयीव्याप्तप्रापत्तेः। तत्पक्षे सर्व्वत्राप्यस्ति श्रवणग्राह्यत्वात्। सपक्षे घटादौ प्रत्यक्षत्वमस्ति न द्व्यणुकादौ विपक्षे सामान्यादावस्ति न व्योमादाविति सपक्षविपक्षैकदेश-वृत्तित्वम् ॥ ७२ ॥

तृतीयं भेदमभिधत्ते ।

पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा गौरयं विषाणित्वा-दिति ॥

विषाणिन एवार्थस्य पक्षीकृतत्वात्पक्षे विषाणित्वम्। सपक्षे च गोवर्गे सर्व्वत्रास्ति तर्णकस्यापि विषाणोत्पत्तियोग्यत्वात्।

विपक्षे महिषादिष्वस्ति न हयादिष्विति विपक्षैकदेशवृत्तित्वम् ॥ ७३ ॥

तुर्य्यं भेदं व्यनक्ति।

*पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा नायं गौर्विषाणित्वादिति ॥

अत्र पुरःस्थस्य विषाणिनः पिण्डस्यागोत्वे साध्ये पक्षे विपक्षे च गोवर्गे सर्व्वत्राप्यस्ति विषाणित्वं सपक्षे तु महिषादावस्ति न हयादाविति सपक्षैकदेशवृत्तित्वम् ॥ ७४ ॥

पञ्चमं भेदमाह।

पक्षत्रयैकदेशवृत्तिर्यथानित्या पृथिवी प्रत्यक्षत्वादिति ॥

प्रत्यक्षत्वमत्राप्यस्मदादीन्द्रियग्राह्यत्वं ज्ञेयमन्यथा पक्षत्रयैकदेशवृत्त्ययोगात् तच्च प्रत्यक्षत्वं पक्षे पृथिव्यां कार्य्यरूपायामस्ति न परमाणुरूपायां सपक्षे घटादावस्ति न द्व्यणुकादौ विपक्षे सामान्यादावस्ति नाकाशादाविति पक्षत्रयैकदेशे वृत्तित्वम् ॥७५॥

षष्ठं भेदमाह।

पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा द्रव्याणि दिक्कालमनांस्यमूर्त्तत्वादिति ॥

अवच्छिन्नपरिमाणयोगित्वं मूर्त्तत्वं तदभावोऽमूर्त्तत्वं तत्पक्षे दिक्कालयोरस्ति न मनसि। तस्याणुपरिमाणत्वेन मूर्त्तत्वात्। तथा द्रव्यत्वे साध्ये सपक्षे आत्मव्योम्नोरमूर्त्तत्वमस्ति। न

* The reading of the text is "सपक्षविपक्षैकदेशवृत्तिः" but the commentator adopted "सपक्षैकदेशवृत्ति" ( Vide page 10, Line 7 ).

पृथिव्यादिषु चतुर्ष्विति पक्षसपक्षैकदेशवृत्तित्वम्। विपक्षे द्रव्य-रूपगुणकर्म्मादिपदार्थपञ्चकेऽप्यस्तीति विपक्षव्यापकत्वम् ॥ ७६ ॥

सप्तमं भेदं वक्ति।

पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा न द्रव्याणि दिक्काल-मनांस्यमूर्त्तत्वादिति ॥

अत्राप्यमूर्त्तत्वं पक्षे दिक्कालयोरस्ति न मनसि मूर्त्तत्वात्। अद्रव्यत्वे साध्ये विपक्षे द्रव्ये आत्मव्योम्नोरमूर्त्तत्वमस्ति न पृथिव्यादिष्विति पक्षविपक्षैकदेशवृत्तित्वम्। अद्रव्यत्वेन सपक्षे गुणादौ सर्व्वत्रास्त्यमूर्त्तत्वमिति सपक्षव्यापकत्वम् ॥ ७७ ॥

अष्टमं भेदमाचष्टे।

सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा न द्रव्याण्याकाश-कालदिगात्ममनांसि क्षणिकविशेषगुणरहितत्वादिति ॥

आश्रये सत्याशुतरविनाशिनः क्षणिकाः। विशेष्यन्ते इतरेभ्यः स्वाश्रया व्यवच्छिद्यन्ते यैस्ते विशेषाः। क्षणिकाश्च ते विशेष-गुणाश्च क्षणिकविशेषगुणास्तैरहितत्वं वियुक्तत्वमिति यावत्। अयं हेतुः पक्षे दिक्कालमनःस्वेवास्ति न व्योमात्मनोस्तयोः शब्दबुद्ध्या-दिभिः क्षणिकविशेषगुणवत्त्वात्। तथाच प्रशस्तपादभाष्यं आकाशा-त्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वमिति। तथा अद्रव्यत्वे साध्ये गुणकर्म्मादयः पञ्च सपक्षाः पृथिव्यादयो विपक्षास्तेष्वयं हेतुरस्ति तेषां क्षणिकविशेषगुणरहितत्वादिति हेतौ कृते पृथिव्या-दीनां विशेषगुणरहितत्वाभावेन तदव्यापनाद्विपक्षैकदेशवृत्तित्वं स्याद्धेतोस्तन्निवृत्त्यै क्षणिकेति पदम् ॥ ७८ ॥

इत्यष्टावनैकान्तिकभेदानभिधायाधुनानध्यवसितभेदानभिधित्सुराह।

अनध्यवसितभेदास्त्वविद्यमानसपक्षविपक्षः पक्षव्यापको यथा सर्व्वमनित्यं सत्त्वादिति॥

अनध्यवसितभेदा उदाह्रियन्त इति वाक्यशेषः। अनध्यवसितस्त्रेधा अविद्यमानसपक्षविपक्षतया विद्यमानसपक्षविपक्षतया अविद्यमानविपक्षविद्यमानसपक्षतया च। त्रिविधोऽपि पक्षसर्वैकदेशव्याप्तिभ्यां पुनर्द्वेधा। एवं भेदाः षट् भवन्ति।

तत्राद्यं भेदमाह। अविद्यमानेत्यादि। अत्र सर्वशब्देन सर्वस्य पक्षीकृतत्वादेव हेतोरविद्यमानसपक्षविपक्षत्वम्। पक्षे तु सत्त्वादिति हेतुरस्त्येव।

ननु यदि सपक्षविपक्षयोरभावादेव तत्र हेतुर्नास्ति तर्हि तस्य को दोष इति चेत् न। सपक्षविपक्षाभाव एव दोषः। यतो हेतुः सपक्षे सन् विपक्षाद्व्यावर्त्तमानश्च सम्यग् हेतुतामास्तिघ्नुते। अयन्तु तदभावादेव सपक्षे सत्त्वविपक्षाद्व्यावृत्तिवैकल्येन साध्यसाधकत्वादनध्यवसितत्वमध्यवस्यतीति॥ ७९॥

द्वितीयं भेदमाविर्भावयति।

अविद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा सर्व्वमनित्यं कार्य्यत्वादिति॥

अत्रापि सर्व्वस्य पक्षीकृतत्वादेव सपक्षविपक्षयोरभावः। कार्य्यत्वं पक्षान्तरनित्येष्वस्ति न नित्येष्विति पक्षैकदेशवृत्तित्वम्॥ ८०॥

तार्त्तीयं भेदं व्यनक्ति।

विद्यमानसपक्षविपक्षः पक्षव्यापको यथा अनित्यः शब्दः आकाशविशेषगुणत्वादिति॥

शब्दस्यानित्यत्वे साध्ये यद्यप्यनित्यनित्यौ सपक्षविपक्षौ विद्येते। तथापि शब्दादन्यस्य कस्यचिदपि साकाशविशेषगुणस्य वस्तुनोऽभावात् हेतोः सपक्षविपक्षाव्यापकत्वम्। पक्षव्यापकत्वं तु व्यक्तमेव॥ ८१॥

चतुर्थं भेदं प्रथयति।

विद्यमानसपक्षविपक्षः पक्षैकदेशवृत्तिर्यथा सर्वं द्रव्यमनित्यं क्रियावत्त्वादिति॥

अत्र सर्वद्रव्यस्यानित्यत्वे साध्येऽनित्यत्वेन गुणकर्म्माणि सपक्षाः। नित्यत्वेन सामान्यविशेषसमवाया विपक्षास्तत्रोभयत्रापि नास्ति क्रियावत्त्वं तेषां निष्क्रियत्वात्। तदुक्तम्।

गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे इति।

सपक्षविपक्षयोः सतोरपि हेतोरव्याप्तिः तथा पक्षीकृतेषु सर्व्वद्रव्येषु पृथिव्यादौ क्रियावत्त्वमस्ति नाकाशादौ मूर्त्तानामेव क्रियावत्त्वेन व्योमादीनां निष्क्रियत्वात्। तदप्युक्तम्। क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्त्तत्वपरत्वापरत्ववेगवत्त्वानीति पक्षैकदेशवृत्तित्वम्॥ ८२॥

पञ्चमं भेदमाह।

अविद्यमानविपक्षो विद्यमानसपक्षः पक्षव्यापको यथा सर्व्वं कार्य्यं नित्यमुत्पत्तिधर्म्मकत्वादिति॥

अत्र सर्व्वस्य कार्य्यस्य पक्षीकरणान्न कश्चिद्विपक्षः। सपक्षास्त्वाकाशादयस्तत्रोत्पत्तिधर्म्मकत्वाभाव एव तेषां नित्यत्वात्। पक्षे कार्य्येऽयं हेतुः प्रतीत एव॥ ८३॥

षष्ठं भेदं व्याचष्टे।

अविद्यमानविपक्षो विद्यमानसपक्षः पक्षैकदेशवृत्तिर्यथा सर्व्वं कार्य्यं नित्यं सावयवत्वादिति॥

अवयवैरारभ्यमाणत्वं सावयवत्वं ग्राह्यं न त्ववयवैः सह वर्त्तत इति विग्रहस्तदङ्गीकारे व्योमादि सावयवं स्यात्तस्यापि घटाद्यवयवैः सह वर्त्तमानत्वात्। तच्च सावयवत्वं पक्षे घटादावस्ति न बुद्ध्यादौ तस्य निरवयवत्वात्। सर्व्वस्य कार्य्यस्य पक्षीकाराद्विपक्षो नास्त्येव सपक्षे सत्यपि व्योमादौ न सावयवत्वममूर्त्तत्वात्॥ ८४॥ *

इति षड़नध्यवसितभेदान् व्याख्याय कालात्ययापदिष्टभेदान् व्याचष्टे।

कालात्ययापदिष्टभेदास्तु। प्रत्यक्षविरुद्धो यथानुष्णोऽयमग्निः कृतकत्वादिति॥

कालात्ययापदिष्टभेदा दर्श्यन्त इति शेषः। अत्रानुमाने यद्यपि पक्षेऽग्नौ कृतकत्वं प्रमाणप्रसिद्धमस्ति। तथाप्यौष्ण्यग्राहिणा स्पर्शनप्रत्यक्षेण बाधिते धर्म्मिणि स्थायुक्ततया हेतुः कालात्ययापदिष्टो भवति। प्रत्यक्षेणानुमानविषयबाधात्।

---

* The commentator does not explain the bracketed portion of the text [ See page, 11, lines 7-8 ].

तथा ह्यज्ञातस्य निषेद्धुमशक्यत्वात्तथाविधौष्ण्यस्य चाग्नेरन्यत्वानुपलम्भादग्नावपि प्रत्यक्षेण प्रतीतत्वात्। अन्यथास्यानुमानस्याप्रवृत्तेस्ततः प्रत्यक्षप्रामाण्याभ्युपगमे सति प्रत्यक्षप्रतीतप्रतिषेधे प्रवर्त्तमानमनुमानं तद्विपरीतवृत्तिना तेनैवाग्न्यौष्ण्यग्राहिणा प्रत्यक्षेण बाध्यते विषयापहारात्। तस्मिन् सत्यनुमानस्याभाव एव स्यात्। तदुक्तम्।

वैपरीत्यपरिच्छेदे नावकाशः परस्य तु।

मूले तस्य ह्यनुत्पन्ने पूर्व्वेण विषयो हतः॥ इति।

नन्वयं पक्षाभासो न हेत्वाभासः। पक्षस्यैव दुष्टत्वादिति चेन्न। आश्रयस्य दौष्ट्येनाश्रितस्यापि दुष्टत्वसम्भवात्। अन्यथा यस्य कस्यापि हेतोः स्वरूपासिद्ध्यभावे सति हेत्वाभासत्वं क्वापि न स्यात्। ततो दुष्टपक्षवर्त्तित्वगुणतयायं हेतुर्हेत्वाभास एवेति॥ ८५॥

द्वितीयं भेदमाह।

अनुमानविरुद्धो यथा परमाणवोऽनित्या मूर्त्तत्वादिति॥

अवच्छिन्नपरिमाणयोगित्वं मूर्त्तत्वं तद्यद्यपि परमाणुष्वस्ति तथापि तेषां नित्यत्वसाधकेनानुमानेनैतदनुमानं बाध्यते मूर्त्तत्वेऽपि परमाणूनां नित्यत्वात्। नित्यत्वसाधकं किमनुमानमिति चेत्। उच्यते। परमाणवो नित्या अकार्य्यत्वादाकाशवदिति। नन्वस्यानुमानस्य को विशेषो येनेदं तद्बाधकमिति चेत्।

यस्मादणुतरो नास्ति सक्रियो नित्य एव वा।

नित्यत्वे सत्यजन्यो यः परमाणुः स लक्षित इति॥

आगमबद्धमूलत्वेन बलीयस्त्वमिति ब्रूमः। ततो बलवता दुर्ब्बलं बाध्यते इति सार्व्वत्रिकन्यायादेतत्तद्बाधकं भवति। परमाणुसत्त्वे चाणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यान्महापरिमाणतारतम्यवदिति प्रमाणम्। परमाणूनामकार्य्यत्वं चोपादानकारणाभावात्। यतः कार्य्यद्रव्यात्पटस्य तन्तुवदल्पपरिमाणमेवोपादानकारणं प्रसिद्धम्। न च परमाणुभ्योऽन्यदल्पपरिमाणं किञ्चिदस्तीति॥ ८६॥

तृतीयं भेदमुपन्यस्यतीति।

आगमविरुद्धो यथा ब्राह्मणेन पेयं सुरादि द्रवद्रव्यत्वात् क्षीरवदिति॥

अत्र हेतुत्रैरूप्ये सत्यपि सुरादिपाननिषेधकेनागमेन बाध्यते। आगमः क इति चेत्।

गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।

यथैवैका तथैवान्या न पातव्या द्विजोत्तमैः॥

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्।

तया स्वकाये निर्दग्धे मुच्यते किल्बिषात्ततः॥

इत्यागमादिति ब्रूमः। ब्राह्मणस्य पानार्हा सुरा पीता सती पापसाधनं न भवतीति प्रतिज्ञातात्पर्य्यार्थः। तत्र क्षीरं निदर्शनं तस्य च पापसाधनत्वाभावः श्रुतिस्मृत्यागमैकसमधिगम्यः। येन

चागमेन क्षीरपानस्य पापसाधनत्वाभाव उक्तस्तेनैव सुरापानस्य पापसाधनत्वमुक्तमिति। प्रतिज्ञाया दृष्टान्तग्राहकप्रमाणेनेति विरोधः॥ ८७॥

चतुर्थं भेदमाह।

प्रत्यक्षैकदेशविरुद्धो यथा सर्व्वं तेजोऽनुष्णं रूपित्वादिति॥

अत्र सर्व्वस्य तेजसोऽनुष्णत्वं साध्यं तच्चानुमानस्य प्रत्यक्षपूर्व्वकत्वात् प्राक्प्रवृत्तप्रत्यक्षेण वह्न्यादर्पत्यादावौष्ण्यग्राहिणा चन्द्ररत्नादावनौष्ण्यग्राहिणा विरुध्यते इति प्रत्यक्षैकदेशे विरुद्धो हेतुर्भवति॥ ८८॥

पञ्चमं भेदमभिधत्ते।

अनुमानैकदेशविरुद्धो यथा नित्याश्रया द्रवत्वरसरूपगन्धस्पर्शा नित्या अप्रदेशवृत्तिसमानजात्यारम्भकत्वे सति परमाणुवृत्तित्वात्तद्गतैकत्ववदिति॥

अत्र परमाणुवर्त्तिनो द्रवत्वादयः पञ्च धर्म्मिणः नित्या इति साध्यम्। अप्रदेशवृत्त्यादिर्हेतुः। परमाणुवर्त्त्यैकत्वसंख्यावदिति दृष्टान्तः। अत्रानित्याश्रयाश्रितानां द्रवत्वादीनामनित्यत्वमस्ति। तद्व्यवच्छेदार्थं पक्षे नित्याश्रया इति पदम्। तथा परमाणुवृत्तित्वादित्युक्ते हेतौ तद्वृत्तिना संयोगेन व्यभिचारः स्यात्तन्निवृत्त्यर्थमप्रदेशवृत्तिपदम्। संयोगस्य प्रदेशवृत्तित्वात्। तथा च सूत्रम्। संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वमिति।

द्रवत्वादयस्तु न तथा। अप्रदेशवृत्तिपरमाणुवृत्तित्वादित्युक्तेऽपि परमाणुगतद्वित्वादिभिरनैकान्तिकत्वं स्यात्तदपोहार्थमारम्भ-

केति। एवं द्वित्वादीनामप्रदेशवृत्तिपरमाणुवृत्तित्वेऽपि सूत्रे परत्वापरत्वद्वित्वपृथक्त्वादीनामकारणत्वमिति वचनादनारम्भकत्वात्। अनारम्भकत्वमप्यमीषां बुद्ध्यपेक्षत्वात्। तथाप्यप्रदेशवृत्त्यारम्भकपरमाणुवृत्तिकर्म्मणातिव्याप्तिः स्यात्तद्व्यवच्छित्त्यै समानजातीयेतिपदम्। कर्म्मणः समानजातीयानारम्भकत्वात्। एवमप्यप्रदेशवृत्त्यादिविशेषणजुषा द्व्यणुकेनातिप्रसङ्गस्तत्परिहाराय गुणत्वे सतीति पदं स्वयमभ्यूह्यम्।

अस्मिंश्चानुमाने पार्थिवपरमाणुरूपादिष्वेव नित्यत्वमनित्यत्वसाधकेन प्रत्यनुमानेन विरुध्यते संहारावस्थायां चतुर्जातीयानां परमाणूनां मिथः संयोगे सति पार्थिवपरमाणुरूपादयस्तैजसाणुभिः पच्यन्त इति पार्थिवाणुरूपादीनामनित्यत्वात्। प्रत्यनुमानञ्चेदम्। पार्थिवपरमाणुरूपादयोऽनित्याः पार्थिवपरमाणुरूपादित्वात्। घटगतरूपादिवदिति॥ ८९॥

षष्ठं भेदमाचष्टे।

आगमैकदेशविरुद्धो यथा सर्व्वेषां देवर्षीणां शरीराणि पार्थिवानि शरीरत्वादस्मदादिशरीरवदिति॥

आगमे देवर्षीणां शरीराणि पार्थिवाप्यतैजसवायवीयतया व्यावर्ण्यन्ते। अत्र तेषां सर्व्वेषामपि शरीरेषु पार्थिवत्वे साध्यमाने हेतोरेकदेश आगमेन विरुध्यते॥ ९०॥

इत्थं षट्कालात्ययापदिष्टभेदानुक्त्वा संप्रति प्रकरणसममुदाहरति।

प्रकरणसमस्योदाहरणं यथाऽनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति ॥ *

पक्षसपक्षयोरिति पक्षः शब्दः सपक्षश्चानित्यत्वेन घटादिस्तयोरन्यतरत्वमेकतरत्वं पक्षत्वं सपक्षत्वञ्चेति यावत्। अयञ्चैक एव हेतुरनित्यत्वे इव नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति नित्यत्वेऽपि त्रिरूपतया वर्त्तमानः प्रकरणसमो भवति ॥ ८१ ॥

आद्यैर्विरुद्धाव्यभिचारी प्रकरणसमत्वेन संगृहीतोऽस्ति तदपाकर्त्तुमाह।

एकत्र तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाव्यभिचारीत्येके इति ॥

एके इति वयमित्यर्थः। एकत्रेति एकस्मिन्नेव धर्म्मिणि तुल्यलक्षणं च तद्विरुद्धहेतुद्वयञ्च तुल्यलक्षणविरुद्धहेतुद्वयं तस्योपनिपात उपन्यासः। विरुद्धं न व्यभिचरतीति विरुद्धाव्यभिचारी। भिन्नधर्म्मिणोरपि हेत्वोः सन्निपातो विरुद्धाव्यभिचारी स्यात् तन्निवृत्त्यर्थमेकत्रेति पदम्। तथापि नित्यः शब्दः प्रमेयत्वादनित्यः शब्दः कार्य्यत्वादनयोर्विरुद्धाव्यभिचारित्वं स्यात्तन्निषेधाय तुल्यलक्षणेति पदम्। एवमप्यनित्यः शब्दस्तीव्रादिधर्मोपेतत्वाच्छब्दो

---

* The commentator adopted the reading of the ms B. which is printed in the Footnote of 12th page. But the reading of other mss is quite different ( See p 12. L 1-2 ).

गुणः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादित्येतयोरपि तथात्वं स्यात् तन्निवृत्त्यै विरुद्धेति पदम्। यत्रैकस्मिन्नेव धर्म्मिणि त्रैरूप्यादिना समलक्षणं मिथो विरुद्धञ्च हेतुद्वयमुपनिपतति स विरुद्धाव्यभिचारी नामास्य शास्त्रकारस्य मते हेत्वाभासो भवतीत्यर्थः॥ ८२॥

इदमुदाहरति।

*यथा नित्यमाकाशममूर्त्तद्रव्यत्वादात्मवदनित्यमाकाशमस्मदादिबाह्येन्द्रियग्राह्यगुणाधारत्वात् घटवदिति॥

अत्रोभयस्मिन्नप्यनुमाने व्योमैव धर्म्मि साध्यत्वन्तु नित्यानित्यत्वं तत्र नित्यत्वे साध्ये अमूर्त्तद्रव्यत्वादिति हेतुः। अमूर्त्तत्वादित्युक्ते बुद्ध्यादिभिर्द्रव्यत्वादित्युक्ते पृथिव्यादिभिश्च व्यभिचारः स्यात्तन्निवृत्त्यर्थममूर्त्तद्रव्यत्वादित्युक्तम्। तथानित्यत्वे साध्येऽस्मदादीति हेतुः। अत्रापि योगिग्राह्यैः परमाणुभिरन्तःकरणप्रत्यक्षेण चात्मना नैकान्तिकत्वव्युदासायास्मदादिबाह्यपदे। पक्षेऽसिद्धत्वापोहाय गुणाधारेतिपदम्। गुणश्चात्र शब्दः।

अत्र द्वयोरपि हेत्वोर्व्योम्नि प्रयुक्तत्वेनैकाधारत्वम्। त्रैरूप्येण तौल्यलक्षणं नित्येतरत्वसाधकत्वेन विरुद्धत्वम्। नह्यत्रोभयोरपि साधकत्वं वस्तुनो द्व्यात्मकत्वासम्भवात्। नापि परस्परविरोधादुभयोरप्यसाधकत्वं नित्यत्वानित्यत्वव्यतिरेकेण प्रकारान्तरासम्भ-

---

* The reading adopted by the commentator here differs somewhat from the text ( See page 12. Line 4-5 ).

वात्। न चान्यतरस्य हेतोर्विशेषोऽवगम्यते। येनैकपक्षावधारणं स्यात्ततोऽयं तुल्यलक्षणविरुद्धहेतुद्वयोपनिपातो विरुद्धाव्यभिचारी भवति। स च प्रकरणसमात् पृथगेव हेतुद्वयात्मकत्वात्। प्रकरणसमस्य तु स्वपरपक्षसिद्धावेकहेत्वात्मकत्वादिति ॥ ८३ ॥

नन्वयमसिद्धादिवद्धेत्वाभास एव किंवा हेतुरपि स्यादित्याशङ्क्याह।

स खलु पुरुषविशेषमपेक्षमाणो हेत्वाभासो भवत्यन्यतरासिद्धादिवदिति ॥

यथा परं प्रत्यसिद्धो हेतुः स्वप्रयोक्तारमसमर्थमपेक्ष्य तेनासाध्यमानो हेत्वाभासो भवति। यथा स इति विरुद्धाव्यभिचारी। पुरुषविशेषमिति। स्वप्रयोक्तारं दुर्बलमपेक्ष्य हेत्वाभासो भवेत्। यदा त्वन्यतरानुमाने धर्मिग्राहकप्रमाणबाधादिकं दोषमुद्भावयेत्। तदैकं कालात्ययापदिष्टादिदोषग्रस्तं स्यादन्यच्च प्रमाणम्।

अत्र तु व्योम्नो व्यापकत्वेनात्मवत्तदुत्पादककारणाभावात् प्रामाणिक्यां नित्यत्वसिद्धौ सत्यां धर्मिग्राहकप्रमाणबाधितत्वादनित्यत्वसाधकमेवानुमानं कालात्ययापदिष्टं भवतीति। विरुद्धाव्यभिचारी न सर्वथा हेत्वाभास इत्यलम् ॥ ८४ ॥

हेतुप्रसङ्गेन हेत्वाभासान् सोदाहरणानुदाहृत्य संप्रत्युदाहरणाख्यं तृतीयमवयवं व्याचष्टे।

सम्यग्दृष्टान्ताभिधानमुदाहरणमिति ॥

अत्रोदाहरणमिति लक्ष्यं शेषन्तु लक्षणम्। उदाह्रियेते

निर्दिश्येते साध्यसाधने अस्मिन्नित्युदाहरणं निदर्शनमिति। किं तदित्याह सम्यगित्यादि। दृष्टयोः साध्यसाधनयोरन्तोऽवसानं यस्मिन्नसौ दृष्टान्तस्तदभिधानं कथनमिति। सम्यक्पदं दृष्टान्ताभासव्युदासार्थम्। दृष्टान्तपदं यत्किञ्चिदभिधानस्योदाहरणत्वव्यवच्छेदाय।

न चेदमुदाहरणं व्यर्थमिति बौद्धैः प्रत्यवस्थेयम्। हेतुवदस्यापि प्रतिपाद्यप्रतिपत्त्यङ्गभूतत्वात्। हेतुरेवैकस्तत्र समर्थ इति चेन्न। विप्रतिपन्नं प्रति तत्प्रयोगेऽपि प्रतिपत्त्यदर्शनात्। संप्रतिपन्नं प्रति तु तदभावेऽपि तदीक्षणात्। तत्राग्निरस्तीति निश्चितासत्वपुरुषप्रणीतवचनादपि साध्यसिद्धौ हेतोरप्यनपेक्षणीयत्वप्रसङ्गात्। अथ परप्रतिपत्त्यर्थं हेतुरपेक्ष्यत एवेति चेत्तर्ह्युदाहरणमप्यपेक्षणीयमेव तद्विना तदयोगादित्यलं प्रसङ्गेन ॥ ९५ ॥

तद्भेदमाह।

तद्द्विविधं साधर्म्यवैधर्म्यभेदादिति ॥

समानो धर्मो यस्य स सधर्मा। विरुद्धो विसदृशो वा धर्मो यस्य स विधर्मा तयोर्भावौ साधर्म्यवैधर्म्ये तयोर्भेदात्तद्द्विभेदमित्यर्थः ॥ ९६ ॥

तत्राद्यमुदाहरति।

अन्वयमुखेन दृष्टान्ताभिधानं साधर्म्योदाहरणं यथानित्यः शब्दस्तीव्रादिधर्मोपेतत्वात् यद्यत्तीव्रादिधर्मोपेतं तत्तदनित्यं दृष्टं यथा सुखादीति॥

अन्वयमुखेनेति। साध्यसामान्येन साधनसामान्यस्य व्याप्ति

रन्वयस्तद्द्वारा निदर्शनं साधर्म्योदाहरणं भवति। तीव्रादिधर्मो-पेतत्वमिति तीव्रत्वमुच्चैस्त्वं आदिशब्दात्तीव्रतरत्वतीव्रतमत्वादि-परिग्रहः। तीव्रत्वादिधर्मैरुपेतः शब्द एव तस्य भाव इत्यर्थः। यद्यत्तीव्रादिधर्मोपेतमित्यादि अन्वयव्याप्तिप्रदर्शनम्।

सुखादीति दृष्टान्तः। आदिशब्दाद्दुःखादिपरिग्रहः। तार-तम्येनानुभवनात् सुखादौ तीव्रादिधर्मोपेतत्वमस्त्येव तस्मादनित्य-त्वमस्तीति साध्यसाधनवत्त्वम्।

ननु तीव्रादिधर्मोपेतत्वादित्ययं हेतुर्भागासिद्धः यतोऽन्त्यशब्द एवानुभूयते। तीव्रादिधर्मोपेतत्वं न शब्दजनितशब्दान्तरेष्विति चेत्। नैवम्। पूर्व्वशब्दानां यदि तीव्रादिधर्मोपेतत्वं न स्यात्तदा-न्त्येऽपि शब्दे न स्यात्पूर्व्वशब्दजनितत्वादन्त्यशब्दस्य। तथाच सति समानजातीयारम्भकत्वमपि भज्येत तस्मादस्त्येव पूर्व्वशब्देष्वपि तीव्रादिधर्मोपेतत्वम्। अत्रानुमानम्। विवादाध्यासिताः शब्दाः तीव्रादिधर्मोपेताः शब्दत्वादन्त्यशब्दवदिति ॥ ८७ ॥

वैधर्म्योदाहरणमाह।

व्यतिरेकमुखेन दृष्टान्ताभिधानं वैधर्म्योदाहरणं यथा यद-नित्यं न भवति तत्तीव्रादिधर्मोपेतमपि न भवति यथाकाश-मिति ॥ *

व्यतिरेकमुखेनेति। साधनसामान्याभावेन साध्यसामान्या-

---

* The reading "एतेनोदाहरणाभासानामुदाहरणलक्षणमुक्तं भवति" is added here in the text ( Vide page 12, Line 16 ).

भावस्य व्याप्तिर्व्यतिरेकस्तद्द्वारा दृष्टान्तभणनं वैधर्म्योदाहरणं भवति। यदनित्यं न भवतीत्यादि व्यतिरेकव्याप्तिप्रकटनम्। आकाशमिति दृष्टान्तः। तत्रानित्यत्वाभावात्तीव्रादिधर्मापितत्वस्याप्यभावः। वैधर्म्यदृष्टान्तस्य च प्रमाणसिद्धत्वात्। यदुक्तं बौद्धैः।

तस्मात् वैधर्म्यदृष्टान्तोनेष्टोऽवश्यमिहाश्रयः।
तदभावेऽपि तन्नेति वचनादपि तद्गतेरिति॥

तत्रप्युक्तं ज्ञेयम्। व्यतिरेकदृष्टान्तं विना यत्रेदं नास्ति तत्रेदमपि नास्ति इति वचनादेव साध्यव्यावृत्त्या साधनव्यावृत्तिप्रतीतेरसम्भवादित्यर्थः॥ ९८॥

उदाहरणलक्षणप्रणयनेनोदाहरणाभासाः प्रतिक्षिप्ता भवन्त्यतस्तेषां लक्षणं सोदाहरणमाह।

*उदाहरणलक्षणरहिता उदाहरणवदाभासमाना उदाहरणाभासास्ते चानेकप्रकारास्तथाचानित्यं मनो मूर्त्तत्वादित्येतस्मिन् प्रयोगे सर्वेऽपि उदाहरणाभासा उच्यन्ते इति॥

अत्रोदाहरणाभासा इति लक्ष्यम्। शेषं लक्षणम्। उदाहरणलक्षणं साध्यसाधनक्रोडीकृतत्वं तेन रहिताः। वतिनोदाहरणतौल्येनाभासमानाः स्वार्थासाधकत्वादुदाहरणाभासा भवन्ति। उदाहरणाभासा इति लक्षणे कृते किमपेक्षा स्यात्तन्नुत्तये

---

* The reading adopted by the commentator here differs somewhat from the text ( See page 13, Line 1 ).

उदाहरणवदाभासमाना इति पदम्। सम्यगुदाहरणेष्वतिव्याप्ति-निवृत्त्यर्थमुदाहरणलक्षणरहिता इति पदम्। ते च बहुधा भवन्तीत्याह। अनेकप्रकारा इति। उदाहरणानां बाहुविध्यादिति शेषः। तथाचेति प्रयोगोपदर्शनार्थे प्रयोगानन्तरं निदर्शनस्य दर्शयितुमुचितत्वेन। अनित्यं मनो मूर्त्तत्वात् इत्यत्रानुमाने उदाहरणाभासोदाहरणानि कथ्यन्त इत्युक्तम्।

ननु मनसि कथं मूर्त्तत्वमिति चेत्। अनुमानादिति ब्रूमः। मनोऽणुपरिमाणं आत्मसंयोगित्वे सति निरवयवत्वात् परमाणुवदिति ॥ ९९ ॥

उदाहरणाभासानेव दर्शयति।

यन्मूर्त्तं तदनित्यं दृष्टं यथा परमाणुरिति साध्यविकल इति ॥

यन्मूर्त्तमित्याद्यन्वयव्याप्तिः। अत्र साध्यस्यानित्यत्वस्य परमाणावभावात् दृष्टान्तस्य साध्यवैकल्यं मूर्त्तत्वेऽपि परमाणोर्नित्यत्वात् ॥ १०० ॥

यथा कर्म्मेति साधनविकल इति ॥

अत्र साधनस्य मूर्त्तत्वस्य कर्म्मण्यभावात् साधनवैकल्यम्। मूर्त्तभावस्तु कर्म्मणोवासनारूपत्वात् ॥ १०१ ॥

यथाकाशमित्युभयविकल इति ॥

अनित्यत्वमूर्त्तत्वयोराकाशेऽभावादुभयवैकल्यम् ॥ १०२ ॥

यथा शशविषाणमित्याश्रयहीन इति ॥

शशविषाणस्याभावाद्दृष्टान्तस्याश्रयवैकल्यम्। अयञ्च महान् दोषो व्याप्तेर्निरधिकरणाया निश्चेतुमशक्यत्वात् ॥ १०३ ॥

घटवदित्यव्याप्त्यभिधानमिति ॥

न व्याप्तेरभिधानमव्याप्त्यभिधानं नाम दोषो भवति। यन्मूर्त्तं तदनित्यं दृष्टमिति व्याप्तिमविरचय्यैव घटदृष्टान्तोपादानात् व्याप्तिनिश्चयार्थमेव दृष्टान्ताभ्युपगमात् ॥ १०४ ॥

यदनित्यं तन्मूर्त्तं दृष्टमिति विपरीतव्याप्त्यभिधानमिति ॥

यन्मूर्त्तं तदनित्यं दृष्टमिति वाच्ये यदन्यथाभणनं तद्विपरीतव्याप्त्यभिधानं नाम दोषः ॥ १०५ ॥

किमेतौ दृष्टान्तदोषावन्यथा वेत्याह।

एतौ तु वचनदोषाविति ॥ *

एतावव्याप्त्यभिधानविपरीतव्याप्त्यभिधानरूपौ वचनदोषौ वक्तृदोषावित्यर्थो न वस्तुदोषौ वक्तृप्रमादोत्पन्नत्वात्। एतेन प्राच्याश्चत्वारो वस्तुदोषा इत्यावेदितम् ॥ १०६ ॥

षट् साधर्म्योदाहरणाभासान् व्याख्याय वैधर्म्योदाहरणाभासान् वर्णयति।

† यन्नित्यं तन्मूर्त्तमपि न भवति यथा परमाणुरिति साधनाव्यावृत्त इति ॥

साधनादव्यावृत्तः साधनाव्यावृत्तो नाम वैधर्म्यदृष्टान्तदोषो भवति। एवं साध्याव्यावृत्तादिपदेष्वपि विग्रहः स्वयं कार्य्यः।

---

* This aphorism adopted by the commentator is not in the Text ( See page 13 ).

† The text reads "यदनित्यं" instead of "यन्नित्यं" ( See p 13, L 9 ).

यन्नित्यं तन्मूर्त्तमपि न भवतीति व्यतिरेकव्याप्तिः । परमाणुरिति दृष्टान्तः । तस्य मूर्त्तत्वान्मूर्त्तत्वसाधनादव्यावृत्तत्वम् ॥ १०७ ॥

यथा कर्मेति साध्याव्यावृत्त इति ॥

कर्म्मणोऽनित्यत्वेन साध्याव्यावृत्तत्वं ज्ञेयम् ॥ १०८ ॥

यथा घट इत्युभयाव्यावृत्त इति ॥

घटस्यानित्यत्वान्मूर्त्तत्वाच्च साध्यसाधनद्वयादव्यावृत्तत्वम् ॥१०९

यथा खपुष्पमित्याश्रयहीन इति ॥

खपुष्पस्यासत्त्वाद्दृष्टान्तस्याश्रयहीनत्वम् ॥ ११० ॥

आकाशवदित्यव्याप्तत्यभिधानमिति ॥

यन्नित्यं तन्मूर्त्तमपि न भवतीति व्यतिरेकव्याप्तिमकृत्वैवाकाशस्य दृष्टान्तीकरणादव्याप्तत्यभिधानत्वम् ॥ १११ ॥

*यदमूर्त्तं तदनित्यं न भवति यथाकाशमिति विपरीतव्याप्तत्यभिधानमिति ॥

यन्नित्यं तन्मूर्त्तमेव न भवतीति वक्तव्येऽन्यथाकथनं विपरीतव्याप्तत्यभिधानं दोषः ॥ ११२ ॥

अनयोरपि वचनदोषत्वं न वस्तुदोषत्वमित्याह ।

एतौ वचनदोषाविति ॥

एताविति अव्याप्तत्यभिधानविपरीतव्याप्तत्यभिधानलक्षणौ दृष्टान्तदोषौ न भवत इत्यर्थः ।

---

* The reading adopted by the commentator here differs somewhat from the text ( See page 13, Line 13 ).

ननु दृष्टान्ते वक्तृकौशलमप्यपेक्ष्यत इति अन्वये व्यतिरेके चाव्याप्त्यभिधानविपरीतव्याप्त्यभिधाने दृष्टान्तदोषाविति चेन्न। करणपाटवादीनामपि तत्रापेक्षणीयत्वेन तदभावे तेषामपि दृष्टान्तदोषापत्त्या दृष्टान्ताभासानामियत्ताभङ्गप्रसङ्गात् ततो वचनदोषावेवैतौ ॥ ११३ ॥

एतेषु विभागमाह।

अत्राद्याः षट् साधर्म्योदाहरणाभासा इतरे षट् वैधर्म्योदाहरणाभासा इति ॥

व्यक्तमेतत् ॥ ११४ ॥

केषाञ्चिन्मतेऽन्येप्युदाहरणाभासाः सन्तीत्याह।

अन्ये तु सन्देहद्वारेणापरानष्टावुदाहरणाभासान् वर्णयन्तीति ॥

साध्यादीनां यः सन्देहोऽर्थात् दृष्टान्ते स एव द्वारमुपायस्तेनेत्यर्थः ॥ ११५ ॥

तानुदाहरति।

सन्दिग्धसाध्यो यथा महाराज्यं करिष्यत्ययं सोमवंशोद्भूतत्वात् विवक्षितराजपुरुषवदिति ॥

अत्र सोमवंशस्य कस्यापि महाराज्यकरणं साध्यं सोमवंशोद्भूतत्वं हेतुः दृष्टान्तः। सोमवंश एव कश्चिद्राजपुत्रस्तत्र साधनं निश्चितं परं राज्यं करिष्यति न वेति साध्यस्य सन्दिग्धत्वात् सन्दिग्धसाध्यो दृष्टान्ताभासोऽयम् ॥ ११६ ॥

सन्दिग्धसाधनोऽपि यथा नायं सर्वज्ञो रागादिमत्त्वाद्रथ्यापुरुषवदिति ॥

अत्रापि दृष्टान्तीकृते रथ्यापुरुषे येन केनाप्युपायेन निश्चिता सर्वज्ञत्वे रागादिमत्त्वं सन्दिग्धम्। नन्वसर्वज्ञत्वस्य रागादिमत्त्वेन सहाविनाभावित्वादसर्वज्ञत्वं निश्चित्यैव तन्निश्चितौ सन्दिग्धोभयोऽयं स्यान्न सन्दिग्धसाधन इति चेत्। सत्यं परमनुदरा कन्येति सदपि तदसर्वज्ञत्वं सन्दिग्धत्वेनाविवक्षितत्वाद्‌ रागादिमत्त्वं विवक्षितम्। तत्सन्दिग्धमस्तीति सन्दिग्धसाधनत्वम्॥ ११७॥

सन्दिग्धोभयो यथा गमिष्यत्ययं स्वर्गं विवक्षितः पुरुषः समुपार्जितशुक्लधर्म्मत्वाद्देवदत्तवदिति॥

अत्र दृष्टान्तीकृते देवदत्ते उभयं सन्दिग्धम्। कोवेद देवदत्तः समुपार्जितशुक्लधर्म्मत्वो न वा स्वर्यास्यति न वेत्युभयस्य साधनस्य साध्यस्य च सन्दिग्धत्वात्॥ ११८॥

सन्दिग्धाश्रयो यथा नायं सर्वज्ञोऽवद्यवक्तृत्वात्* भविष्यद्देवदत्तपुत्रवदिति॥

अत्र दृष्टान्तीकृते भविष्यति देवदत्तपुत्रे प्रमाणाभावादाश्रयस्य सन्दिग्धत्वम्॥ ११९॥

एवं साधर्म्येण चतुरो दृष्टान्ताभासान् प्रकाश्य वैधर्म्येण तानाह।

सन्दिग्धसाध्याव्यावृत्तो यथा यो महाराज्यं न करिष्यति स सोमवंशोद्भूतोऽपि न भवति यथाऽन्यो राजपुरुष इति॥

---

* The Text reads "बहुवक्तृत्वात्" instead of 'अवद्यवक्तृत्वात्" ( See p 14, Line 6 ).

सन्दिग्धसाध्यादव्यावृत्तः सन्दिग्धसाध्याव्यावृत्तः । एवं पुरो-ऽपि विग्रहः स्वयमभ्यूह्यः । यो महाराज्यं न करिष्यतीत्यादि व्यतिरेकव्याप्तिः । अन्यस्मिन् राजपुरुषे सोमवंशादन्यत्रोत्पादिष्णा-वपि राज्यकरणं प्रमाणाभावात् सन्दिग्धं ततो दृष्टान्तस्य सन्दिग्ध-साध्याव्यावृत्तत्वम् ॥ १२० ॥

सन्दिग्धसाधनाव्यावृत्तो यथा यस्तु सर्वज्ञः स रागादिरहितो यथा समस्तशास्त्राभिज्ञ इति ॥

अत्र समस्तशास्त्राभिज्ञे रागादिमत्त्वं साधनं सन्दिग्धम् । कर्हिचित्तस्यापि रागादिमत्त्वादिति सन्दिग्धसाधनाव्यावृत्तत्वं दृष्टान्तस्य ॥ १२१ ॥

सन्दिग्धोभयाव्यावृत्तो यथा यः स्वर्गं न गमिष्यति स समु-पार्जितशुक्लधर्म्मोऽपि न भवति यथा दुःस्थः पुरुष इति ॥

अत्र दुःस्थे पुंसि स्वर्गतिः समुपार्जितशुक्लधर्म्मत्वस्य च प्रमाणा-भावान्न निर्णयः । कर्हिचिद्दुःस्थोऽपि स्वर्गामी समुपार्जितशुक्ल-धर्म्मश्च स्यादिति सन्दिग्धसाध्यसाधनत्वम् ॥ १२२ ॥

सन्दिग्धाश्रयो यथा यः सर्वज्ञः सोऽवद्यवक्तापि* न भवति यथा भविष्यद्देवदत्तपुत्र इति ॥

अत्र दृष्टान्तीकृतस्य देवदत्तपुत्रस्य भविष्यत्त्वादेव सन्दिग्धा-श्रयत्वम् । को वेद पुत्रो वा पुत्री वा भविष्यति ॥ १२३ ॥

---

* The text reads "बह्वक्तापि" instead of "अवद्यवक्तापि" (See page 14, Line 13).

इत्थं दृष्टान्तं साभासं स्पष्टयित्वोपनयं लक्षयति ।

दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनमुपनय इति ॥

अत्रोपनय इति लक्ष्यं शेषं तु लक्षणं उपनीयते प्राप्यते दृष्टान्ते प्रसिद्धाविनाभावं साधनं साध्यकोटिमनेनेत्युपनयः । किं तत् व्याप्तिख्यापकं वचनमिति साध्यसाधनयोः क्रोडीकरणं व्याप्तिः । सा ख्याप्यते येन तत्तथा । क्व पक्षे प्रतिज्ञायाम् । कस्येत्याह साधनस्य हेतोः । कीदृशः प्रसिद्धेत्यादि । क्व दृष्टान्ते । केन दृष्टान्तोपमानेनेति । दृष्टान्तस्योपमानं तथाचेति रूपं वचनं तेन ।

वचनमुपनय इत्युक्ते यत्किञ्चिद्वचनमुपनयः स्यात्तन्निवृत्त्यै व्याप्तिख्यापकमिति पदम् । कस्येत्यपेक्षाप्रतिक्षेपार्थं साधनस्येति पदम् । साधनाभासस्यापि व्याप्तिख्यापकं वचनमुपनयः स्यात्तन्निवृत्त्यर्थं दृष्टान्ते प्रसिद्धाविनाभावस्येति पदम् । यत्र क्वापि व्याप्तिख्यापकवचनस्योपनयत्वापनुत्त्यै पक्षे इति पदम् । हेतुवचने चातिव्याप्तिव्यवच्छित्त्यै दृष्टान्तोपमानेनेति पदम् । उपमानेनेति विशेषणमुपलक्षणं तेन वैधर्म्येणाप्युपनयः स्यादिति तात्पर्य्यम् ॥ १२४ ॥

उपनयः साधर्म्यवैधर्म्यभेदाद् द्विधा भवति तत्राद्यं भेदं दर्शयति ।

* तथाच तीव्रादिधर्मोपेतः शब्द इति साधर्म्योपनय इति ॥

---

* The reading "स द्विविधः साधर्म्योपनयो वैधर्म्योपनयश्चेति" is added in the text before the aphorism adopted by the commentator here. ( See page 14. Line 17 ).

तथेति शब्दो दृष्टान्तोपमानद्योतनार्थः यथा सुखादि तीव्रादि-धर्मोपेतं तथा शब्दोऽपीत्यर्थः। सुखादिसधर्मगततीव्रादिधर्मो-पेतत्वोपनयादयं साधर्म्योपनय इति कथ्यते॥ १२५॥

द्वितीयं भेदं दर्शयति।

* न च तथा तीव्रादिधर्मोपेतः शब्दो न भवतीति वैधर्म्यो-पनय इति॥

अत्रापि तथेति वैधर्म्यदृष्टान्तोपप्रदर्शनार्थः। यथाकाशं तीव्रादिधर्मोपेतं न भवति तथाकाशवन्न। न तीव्रादिधर्मोपेतः शब्दोऽपितु तीव्रादिधर्मोपेत एव। आकाशवैधर्म्यव्यावृत्ततीव्रादि-धर्मोपेतत्वोपनयनाद्वैधर्म्योपनयोऽयमुच्यते। यद्यपि नञ्द्वयेन न कश्चिदर्थभेदस्तथाप्युक्तिभेदोऽस्तीति नानयोरैक्यमिति। साधना-भिधानस्य सामर्थ्यादेव पक्षधर्मत्वप्रतीतिसिद्धेर्व्यधिकरणस्य चासाधकत्वात् द्विधाप्युपनयोऽसौ व्यर्थ इति चेन्न हेत्वभिधान-सामर्थ्याद्व्याप्तिसिद्धावनन्वितस्य च तदयोगे दृष्टान्तोऽपि न वाच्यः स्यात्। असिद्धस्यापि हेतोर्भ्रान्त्या हेतुत्वसंभवात्ततो निश्चिता-न्वयप्रतिपत्तिर्न स्यादिति दृष्टान्तेन सा दृढ़ीक्रियते इति चेत्। अत्रापि अपक्षधर्मस्यापि हेतोर्भ्रान्त्या हेतुत्वदर्शनान्न ततः पक्ष-धर्मत्वसिद्धिरस्तीति दृष्टान्तस्थहेतोः पक्षेऽस्तित्वख्यापक उपनयो-ऽभ्युपेतव्यः। असिद्धस्यापि हेतोरुपनयो दृश्यते इति कथं ततः पक्षधर्मत्वसिद्धिरिति चेन्न। विनाभूतस्यापि हेतोर्हेतुत्वं दृश्यते।

---

* The word न च is omitted in the text. ( See page 14. Line 18 ).

कथं ततो नान्वयसिद्धिरित्यलं प्रतिबन्ध्या । ततो हेतोः पक्षधर्मत्व-निश्चित्यै उपनयोऽङ्गीकर्त्तव्य एवेति ॥ १२६ ॥

इत्युपनयं व्याख्याय निगमनमवगमयति ।

उपनयानन्तरं सहेतुकं प्रतिज्ञावचनं निगमनमिति ॥

अत्र निगमनमिति लक्ष्यं शेषं तु लक्षणम् । निगम्यते नियम्यते साध्यलक्षणार्थोऽनेनेति निगमनम् । किं तदित्याह सहेतुकं प्रतिज्ञावचनमिति हेतुसहितः पक्षनिर्देश इत्यर्थः । कदा उप-नयानन्तरमिति । प्रतिज्ञावचनं निगमनमित्युक्ते शब्दोऽनित्य इत्य-स्यामपि प्रतिज्ञायां निगमनत्वं स्यात्तदपोहार्थं सहेतुकमिति । तथाप्यनित्यः शब्दः कृतकत्वादित्येतदपि निगमनं स्यात्तन्निवृत्त्यै उपनयानन्तरमिति । उपनयमुक्त्वा हेतुयुक्तं पुनः प्रतिज्ञावचनं यन्निर्दिश्यते तन्निगमनमित्यर्थः ॥ १२७ ॥

उदाहरति ।

* तस्मादनित्यएवेति ॥

तस्मादिति तीव्रादिधर्मोपेतत्वात् । शब्दोऽनित्यएव भवतीति निगमनम् ॥ १२८ ॥

ननु स्वार्थानुमानं यथा लिङ्गसामर्थ्यादुट्टीकते तथा परार्थानु-मानमपि । इयांस्तु विशेषः स्वप्रतीतौ स्वयमिदमनुसन्धीयते । पर-

---

* The reading "तदपि द्विविधं साधर्म्येणवैधर्म्येणभेदात्" is added in the text before the aphorism adopted here, and the reading "साधर्म्येण निगमनं" is added after the aphorism (See page 15. Line 2-3).

प्रतीतौ तद्वाक्येनोच्यते। परं प्रत्यपि वाचकत्वं लिङ्गस्यैव। वाक्यन्तु तदुपक्षेपमात्रे चरितार्थम्। लिङ्गं तच्च हेत्वादिभिरेवावयवैरन्वय-व्यतिरेकाभ्यां प्रत्यपादि। तावतैव साध्यसिद्धेर्वैयर्थ्यं निगमनस्येति पराभिप्रायं मनसिकृत्य तदपोहायाह।

न चेदमनर्थकं साध्यविरुद्धाभावप्रतिपादकप्रमाणसूचकत्वाद-स्येति ॥

इदं निगमनं व्यर्थं न भवति। किन्तु सार्थकम्। अत्र हेतुः साध्येत्यादि। साध्यमनित्यत्वादि तस्य विरुद्धं नित्यत्वादि तन्नास्तित्ववाचकप्रमाणपिशुनत्वात्। अस्येति निगमस्य। कोऽ-भिप्रायः। यद्यपि वाक्यं लिङ्गसामर्थ्यमेव बोधयति न साध्यम्। तथापि लिङ्गस्य सामर्थ्यं न बहिर्व्याप्तिपक्षधर्मतामात्रम्। तस्मिन् सत्यपि प्रकरणसमकालात्ययापदिष्टयोरसाधकत्वात्। किन्त्वस-त्प्रतिपक्षत्वमबाधितविषयत्वमपि तत्सामर्थ्यम्। तच्चोभयं याव-त्प्रमाणेन न प्रतिपाद्यते तावत्प्रतिपक्षसम्भवशङ्काया अनिवृत्तेः साधने धर्मिणि संहृतेऽपि साध्यसिद्धेरयोग इति साध्यविरुद्धा-भावप्रतिपादकप्रमाणसूचनार्थं निगमनमेष्टव्यम्। अनेन हि विपरीतप्रमाणाभावसाधकं प्रमाणमुपदर्श्य प्रकरणसमत्वाद्यभावे निर्णीते साधनं विदितसामर्थ्यं साध्यं साधयतीति निगमनं सार्थकमिति। ततो यद्यनुक्तमपि सामर्थ्यमर्थाल्लभ्यते इति तत् व्यर्थमुच्येत। तदा दृष्टान्तादिकमपि व्यर्थं वाच्यं स्यात्प्रतिज्ञा-नन्तरं हेत्वभिधानादेव धीमता स्वयमेवान्वयव्यतिरेकस्मरणेन साध्यावगमादिति ॥ १२९ ॥

ननु किमर्थं विपक्षे बाधकप्रमाणान्वेषणमित्याह ।

न च तदन्तरेण साध्यावधारणमुपपद्यत इति ॥

तदन्तरेणेति । साध्यविरुद्धाभावप्रतिपादकप्रमाणमन्तरेण । साध्यस्यावधारणं निर्णयो न घटामटाट्यते प्रतिपक्षस्थापकप्रमाणशङ्काया अनिवर्त्तनात् । न च निगमनादन्यत्किञ्चिद्बाधकम् । तस्यैव प्रतिपक्षोत्थापकप्रमाणाभावावेदकत्वादिति प्रागप्युक्तत्वात् ॥ १२० ॥

अत्रार्थे सूत्रकृत्सम्मतिं दर्शयति ।

तथाचोक्तं विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति ॥

विमृश्येति अनित्यः शब्दो नित्यो वेति संदिह्य । अर्थस्य साध्यस्यानित्य एवायं कृतकत्वादित्यवधारणं निर्णयः क्रियत इत्यन्वयः काभ्यामित्याह । पक्षप्रतिपक्षाभ्यामिति । अत्र पक्षप्रतिपक्षशब्देनोपचारात्पक्षविषयं साधनं प्रतिपक्षविषयं साधनदूषणमुच्यतेऽन्यथा निर्णयायोगात् । कोऽर्थः । निगमनेन प्रतिपक्षसाधनं प्रतिक्षिप्य साध्यनिर्णयः कर्त्तव्य इति ॥ १२१ ॥

किञ्च यो निगमनं साधनाङ्गमित्यनभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छति । स निगृहीतः स्यादित्यावेदयितुमाह ।

निगमनाभिधानमसाधनाङ्गमभ्युपगम्य बाधकं प्रमाणमभ्युपगच्छतो निग्रहस्थानं प्रसज्येतेति ॥

बौद्धो हि निगमनं साधनाङ्गं न भवतीति प्रतिशृणोति । स यदा सर्वं क्षणिकं सत्त्वादित्यादावनुमानेऽर्थक्रियाकारित्वमेव

सत्त्वं तच्चाक्षणिकेषु क्रमाक्रमाभ्यामनुपपद्यमानं स्वव्याप्यामर्थक्रियामादाय निवर्त्तते ततो क्षणिकं खरविषाणप्रायं स्यादिति विपक्षे बाधकमुपन्यस्यति। तदा प्रतिज्ञासंन्यासनाम्ना निग्रहस्थानेन निगृहीतो भवति। निगमनं नाभ्युपगच्छामीति प्रतिज्ञाया विपक्षे बाधकप्रमाणाभ्युपगत्या सन्न्यासात्॥१३२॥

नन्वन्यत्त्यजतोऽन्यद्गृह्णतस्य कथं निगृहीतिः स्यादित्याह।

निगमनार्थत्वाद्बाधकस्येति॥

बाधकस्य विपक्षक्षेपकप्रमाणस्य निगमनप्रयोजनत्वात्। निगमनार्थमेव बाधकमुपन्यस्यत इत्यर्थः॥ १३३॥

ननु निगमनाभिधानेऽपि कदाचित्परस्य विप्रतिपत्तिर्न व्यपैति ततो विपक्षे बाधकमेवोपन्यस्यते किमनेनान्तर्गडुनेत्याह।

निगमनार्थविप्रतिपत्तौ हि बाधकप्रमाणोपन्यासो युक्तो हेत्वर्थविप्रतिपत्तौ तत्साधकप्रमाणोपन्यासवदितीति॥

ननु बाधकं त्वया कदोपन्यस्यते किं प्रागेव उत निगमनार्थविप्रतिपत्तौ। यदि प्रागेव तदा व्यर्थम्। अथ निगमनार्थविप्रतिपत्तौ तदा निगमनमेवोपन्यास्यं तस्य तद्रूपत्वात्। इदमुक्तं स्यात्परार्थानुमानं न संप्रतिपन्नं प्रति वैयर्थ्यात्। विप्रतिपन्नं प्रति तु यावता हेतोः साधकत्वं वस्तुवृत्त्योपपद्यते तावानर्थो वचनेन प्रतिपादनीयो न प्रतिपत्तृविशेषानुरोधेन वर्त्तितव्यं प्रतिपत्तृणां विचित्रशक्तिकत्वात् तच्चित्तवृत्तेर्दुरन्वयत्वाच्च। तदुक्तम्।

वस्तु प्रत्यभिधातव्यः सिद्धान्तो न नरान् प्रति।
को हि विप्रतिपन्नार्थस्तद्बुद्धीरनुधावतीति॥

तत आकाङ्क्षायां वाक्यं प्रयोक्तव्यम्। तथा हि शब्दः किं नित्यः किं वाऽनित्य इत्याकाङ्क्षायां शब्दोऽनित्य इति प्रतिज्ञा-वचनेनानिश्चितानित्यमात्रविशिष्टः शब्दः कथ्यते। कस्मादि-त्याकाङ्क्षायां तीव्रादिधर्मोपेतत्वादित्यनेन साधनधर्ममात्रमुच्यते। यदि तीव्रादिधर्मोपेतः शब्दस्ततः किमित्याकाङ्क्षायां यदिह तीव्रादिधर्मोपेतं तदनित्यं दृष्टं यथा सुखादीत्यनेन साध्य-सामान्येन साधनसामान्यस्यान्वयमात्रमुच्यते। नित्यं न तीव्रादि-धर्मोपेतं यथा व्योमेत्यनेन साध्याभावे साधनाभावो दर्श्यते। तथाच शब्दो न च तथेत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनस्योपनयोऽभिधीयते। ततो यथा यत्कृतकं तदनुष्णं दृष्टं यथा घट इति बहिर्व्याप्तिसम्भवेऽपि कृतकस्तेजोऽवयव्यनुष्णो न भवति प्रत्यक्षविरोधात्। तथा यत्तीव्रादिधर्मोपेतं तदनित्य-मिति बहिर्व्याप्तौ सत्यामपि तीव्रादिधर्मोपेतोऽपि शब्दो-ऽनित्यो न भविष्यतीति विपक्षशङ्कायां तस्मादनित्यएव शब्दो भवतीति निगमनेनार्थपरिसमाप्तिः क्रियते। अत्र दृष्टान्तः हेत्वर्थेत्यादि। यथानित्यः शब्दः कृतकत्वादित्यस्य हेतोर्मीमांसकं प्रति विप्रतिपत्तौ सत्यां शब्दः कृतकस्तीव्रादिधर्मोपेतत्वात् सुखादि-वदिति तत्साधकप्रमाणोपन्यासो भवति। तथा निगमनार्थविप्रति-पत्तौ बाधकप्रमाणोपन्यासोऽपि स्यात्। ततो बाधकप्रमाणस्य निगमनार्थत्वान्निगमनमेवैष्टव्यं किं तावता क्लेशेनेत्यलम् ॥ १२४ ॥

अथ पञ्चावयवप्रयोगस्य परमन्यायत्वं प्रकाशयन् कथालक्षणं प्रस्तौति।

सोयं परमो न्यायो विप्रतिपन्नपुरुषप्रतिपादकत्वात् कथा-प्रवृत्तिहेतुत्वाच्चेति ॥

स इति पूर्वं व्याचिख्यासितोऽयमितीदानीं परिसमाप्तः। पञ्चावयवरूपो न्यायः। परम इति पत्तः कस्मादित्याह। विप्रतिपन्नेत्यादि। विरुद्धज्ञानो विप्रतिपन्नः।

अत्र विप्रतिपन्नेति च पदमुपलक्षणम्। तेन सन्दिग्धाव्युत्पन्ना-दयोऽप्युपलक्ष्यास्तेषामपि प्रतिपाद्यमानत्वात्। अन्योऽपि राज्ञो न्यायः। कलहायमानजनप्रतिबोधकत्वेन परमो भवत्येव। तथा कथेत्यादि द्वितीयो हेतुः। कथा तु वक्ष्यमाणलक्षणा। एतेन कथा पञ्चावयवप्रयोगपूर्वं कर्त्तव्येत्यावेदितम् ॥ १२५ ॥

अथ कथां लक्षयति।

वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथेति ॥

अत्र कथेति लक्ष्यं शेषं तु लक्षणम्। कथ्यते स्वाभिमतार्थो-ऽनयेति कथा। पक्षेत्यादि पक्षोऽनित्यत्वादिस्तत्प्रतिपक्षो नित्य-त्वादिस्तयोः परिग्रहः स्वीकार इति। कयोरित्याह वादीत्यादि। साधनदूषणवादिनोः परिग्रहो वाद इत्युक्ते यः कश्चिद्वादः कथा स्यात्तन्निवृत्त्यै पक्षप्रतिपक्षेति पदम्। तथापि साधनदूषणरहितं पक्षप्रतिपक्षपरिग्रहमात्रं कथा स्यात्तदपोहार्थं वादिप्रतिवादिनो-रिति पदम्। वादिप्रतिवादिनोः पक्षप्रतिपक्षकक्षीकारेण वचनो-पन्यासः कथेत्यर्थः ॥ १२६ ॥

तद्भेदमभिधत्ते।

सा द्विविधा वीतरागकथा विजिगीषुकथा चेति ॥

स्वयमुपनतेष्वपि विषयेषु वशित्वाद्यः पराङ्मुखः स वीतरागस्तस्य कथा एका सा विजितुमिच्छुर्विजिगीषुस्तस्य कथा द्वितीया च ॥ १३७ ॥

तत्राद्याया लक्षणमाह ।

यत्र वीतरागो वीतरागेणैव सह तत्त्वनिर्णयार्थं साधनोपालम्भौ करोति सा वीतरागकथा वादसंज्ञयैवोच्यत इति ॥

वीतरागः पूर्वोक्तस्वरूपो वीतरागेणैव सह यत्र साधनोपालम्भौ करोति सा वीतरागकथा भवतीति संटङ्कः। साधनोपालम्भाविति साधनं स्वपक्षे उपालम्भश्च परपक्षेऽनुमानदूषणम्। तत्त्वेत्यादि। यस्य वस्तुनो यः स्वरूपं तत्तस्य तत्त्वमुच्यते। यत्र करोति सा वीतरागकथेत्युक्ते किं करोतीति कर्म्मापेक्षा स्यात्तदपनोदाय साधनोपालम्भाविति पदे। कः करोतीति कर्त्रपेक्षाप्रतिक्षेपाय वीतराग इति पदम्। विजिगीषुकथायामपि वीतरागः परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थञ्च विजिगीषुणा सह वादे प्रवर्त्तते तत्रातिव्याप्तिनिवृत्त्यर्थं वीतरागेणेति पदम्। एवकारोऽन्ययोगव्यवच्छेदार्थः। किमर्थं करोतीत्यपेक्षाव्यावृत्त्यै तत्त्वनिर्णयार्थमिति पदम्। कोऽर्थः। यत्र वीतरागस्तत्त्वनिर्णिनीषया वीतरागेणैव सह न तु विजिगीषुणा स्वपक्षप्रतिपक्षौ अनुमानदूषणे उपन्यस्यति सा वीतरागकथा भवति। सा च वादसंज्ञयैवोच्यते। न पुनर्वीतरागकथातो वादः पृथक् पदार्थः। किन्तु वीतरागकथैव वाद इति ॥ १३८ ॥

वीतरागकथा वादसंज्ञयैवोच्यत इत्यत्र सूत्रकारसम्मतिं दर्शयति।

तथाचोक्तम्। प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद इति॥

प्रमाणतर्केत्यादिविशेषणविशिष्टः पक्षप्रतिपक्षपरिग्रहो वादो भवतीत्यन्वयः। प्रमाणेत्यादि। प्रमाणं प्रत्यक्षादि। प्रमाणानुग्राहकः स्वपक्षेऽनुकूलः परपक्षे प्रतिकूलो युक्तिविशेषस्तर्कः। साध्यतेऽनेन पक्ष इति साधनमनुमानम्। उपलभ्यते दूष्यते प्रतिपक्षोऽनेनेत्युपालम्भो दूषणम्। प्रमाणैस्तर्केण च गोचरीकृतसामर्थ्यौ साधनोपालम्भौ यत्र स तथा। सिद्धान्ताविरुद्ध इति। प्रमाणतोऽभ्युपगम्यमानः सामान्यविशेषवानर्थः सिद्धान्तः। तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्त इति सूत्रकारवचनात्। तन्त्रं शास्त्रमधिकरणं येषामर्थानां ते तन्त्राधिकरणास्तेषामभ्युपगमसंस्थितिरित्थम्भावनियमः सिद्धान्त इत्यर्थः।

स चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्। तत्र सर्वतन्त्राविरुद्धं स्वतन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः सर्वेषां संप्रतिपत्तिविषयो यथा प्रमाणानि प्रमेयसाधनानि घ्राणादीन्द्रियाणि गन्धादयस्तदर्था इत्यादि। समानतन्त्रप्रसिद्धः परतन्त्रासिद्धः। प्रतितन्त्रसिद्धान्तो यथा भौतिकानीन्द्रियाणि यौगानां अभौतिकानि सांख्यानाम्। यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः। हेतोर्यस्य सिद्धावन्यस्य प्रतिक्रियमाणस्य प्रतिज्ञार्थस्य सिद्धिः सोऽधिकरणसिद्धान्तः। यथा कार्य्यत्वादेः क्षित्यादौ बुद्धि-

मत्कारणसामान्यसिद्धावन्यस्य तत्कारणसमर्थस्य नित्यज्ञानेच्छाप्रयत्ना-धारस्य तत्कारणस्य सिद्धिरिति। अपरीक्षिताभ्युपगमात्तद्विशेषपरी-क्षणमभ्युपगमसिद्धान्तः। यत्किञ्चिदस्तु अपरीक्षितमभ्युपगम्य विशेषः परीक्ष्यते सोऽभ्युपगमसिद्धान्तो यथास्तु द्रव्यं शब्दः स तु किं नित्यो-ऽनित्यो वेति शब्दस्य द्रव्यत्वमनिष्टमभ्युपगम्य नित्यानित्यत्वविशेषः परीक्ष्यते। एवं चतुर्विधसिद्धान्तमध्ये स्वीकृतसिद्धान्तेनाविरुद्धोऽदुष्ट इति पञ्चावयवोपपन्न इति। पञ्चावयवाः प्रतिज्ञादयः।

कश्चित्तु पञ्चावयवेति पदं स्वपक्षसाधनं १ प्रतिपक्षसाधन-दूषणम् २ साधनसमर्थनं ३ दूषणसमर्थनं ४ अतिद्रुतोच्चारणा-प्रसिद्धप्रयोगादिशब्ददोषवर्जन५मित्येतैः पञ्चावयवैरुपपन्न इति व्याख्याति। परिग्रहो वाद इत्युक्ते यः कश्चित्परिग्रहो वादः स्यात् तद्व्यावृत्त्यर्थं पक्षप्रतिपक्षेति पदम्। बौद्धाद्यभिप्रेतद्वित्राद्यवयव-वादेऽतिव्याप्तिव्यपोहार्थं पञ्चावयवोपपन्न इति पदम्। द्वित्राद्यवयव-वादस्य परप्रतिपत्तेरनङ्गत्वात्। अपसिद्धान्तध्वस्ते वादेऽतिप्रसक्त्य-पनोदाय सिद्धान्ताविरुद्धेति पदम्। अनेन कारणेन वाग्टहयालु-नापि सिद्धान्तानुरोधेन वादः कर्त्तव्यो न स्वाच्छन्देनेति शिक्षितं भवति। जल्पवितण्डयोरतिव्याप्तिनिषेधार्थं प्रमाणतर्कसाधनोपालम्भ इति पदम्। तत्र हि यथाकथञ्चित्परपराजिगीषया छलादीना-मप्यनुज्ञातत्वात्। न च छलादीनां प्रमाणेन तर्केण वा निर्णीत-सामर्थ्यसाधनोपालम्भत्वं परभ्रान्त्यापादनमात्रफलत्वात्तेषाम्।

अत्रायमभिप्रायः। वस्तुधर्मावेकाधिकरणौ विरुद्धावेक-कालावनवसितौ पक्षप्रतिपक्षौ वस्तुधर्मौ वस्तुनो विशेषौ। यथा-

स्यात्मा नास्त्यात्मेति वा। अधिकरणमाश्रय एकमधिकरणं ययोस्तौ। विचारं प्रयोजयतो न नानाधिकरणौ विरुद्धावपि यथानित्य आत्मा अनित्या बुद्धिरिति। अविरुद्धावपि विचारं न प्रयोजयतो यथा क्रियावद्द्रव्यं गुणवच्चेति। भिन्नकालावपि न विचारार्हौ द्वयोः प्रमाणोपपत्तेः यथा क्रियावद्द्रव्यं निःक्रियञ्च। कालभेदेन तथावसितौ विचारं न प्रयोजयतो निर्णयोत्तरकालं विवादाभावात्। तावेवंविधविशेषणौ धर्मौ पक्षप्रतिपक्षौ तयोः परिग्रह इत्यभ्यावनियम एवंधर्मायं धर्मी नैवंधर्मेति च रूपो वादो भवति। तथा प्रमाणशब्देन प्रमाणमूलाः प्रतिज्ञाद्यवयवा व्यपदिश्यन्ते। ततो वादे प्रमाणबुद्धिपरिगृहीतावेव साधनोपालम्भौ प्रयोक्तव्यौ। तर्कशब्देन च भूतपूर्वगतिज्ञानेन वीतरागकथात्वज्ञापनादुद्भावननियमो लभ्यते। तेन वादे प्रमाणबुद्ध्या परेण प्रयुक्तानि च्छलजातिनिग्रहस्थानानि न निग्रहबुद्ध्योद्भाव्यन्ते किन्तु निवारणबुद्ध्या। तत्त्वज्ञानायावयोः प्रवृत्तिर्न च साधनाभासो दूषणाभासो वा तत्त्वज्ञाननिमित्तमतो न तत्प्रयोगो युक्तः उपालम्भश्रवणात्। समस्तनिग्रहस्थानानुषङ्ग इति चेन्न। उत्तरयोः पदयोर्नियमार्थत्वात्। तथाहि सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तः पञ्चावयवोपपन्न इत्यनेन च पञ्चग्रहणात् न्यूनाधिके अवयवग्रहणाद्धेत्वाभासपञ्चकञ्चेत्यष्टावेव निग्रहस्थानानि वादे नियम्यन्ते। कस्मादिति चेत्। गुर्वादिना सह वादोपदेशत्वात्। यतस्तत्त्वबुभुत्सुरेव गुर्वादिना सह सन्देहविच्छेदाज्ञातार्थावबोधाध्यवसिताभ्यनुज्ञा आकाङ्क्षन् वादं करोति। ततोऽसौ यावता

साधनेन तत्त्वं प्रतिपद्यते तावद्वक्तव्यम्। नाधिकमप्रतिद्वन्द्वित्वात्॥ १३९॥

स वादः कश्चिदप्रतिपक्षोऽपि भवतीत्यत्रापि सूत्रकृत्सम्मतिं दर्शयति।

तं प्रतिपक्षहीनमपि वा कुर्य्यात् प्रयोजनार्थित्वेनेति॥

अत्र प्रतिपक्षशब्देन प्रतिपक्षविषयं साधनमुच्यते उपचारात्। तेन रहितमपि तमिति वादं विदध्यात्। अप्यर्थात्तेन सहितमपि वा। केनेत्याह। प्रयोजनेत्यादि तत्त्वबुभुत्सापरतयेत्यर्थः॥ १४०॥

अस्यैव सूत्रस्य तात्पर्य्यमाह।

यथा शिष्यो गुरुणा सह प्रश्नद्वारेणैवेत्यर्थः इति॥

अत्र वादं विधत्ते न तु प्रतिपक्षसाधनमभिधत्त इति वाक्यशेषः॥ १४१॥

अथ विजिगीषुकथां लक्षयति।

यत्र तु विजिगीषुः विजिगीषुणा सह लाभपूजाख्यातिकामो जयपराजयार्थं प्रवर्त्तते सा विजिगीषुकथा। वीतरागो वा परानुग्रहार्थं ज्ञानाङ्कुरसंरक्षणार्थञ्च प्रवर्त्तते। सा चतुरङ्गा वादि-प्रतिवादि-सभापति-प्राश्निकाङ्गा। विजिगीषुकथा जल्पवितण्डा-संज्ञोक्तेति॥

यत्र विजिगीषुर्वीतरागो वा विजिगीषुणा सह जयपराजयाद्यर्थं प्रवर्त्तते। सा पुरुषशक्तिपरीक्षणफला विजिगीषुकथा भवतीति संटङ्कः। लाभेत्यादि। लाभो द्रव्यादिप्राप्तिः। पूजा-

लोकेष्वादरः । ख्यातिः कीर्त्तिः । ताः कामयते वाञ्छति यः स तथोक्तः । जयेत्यादिस्तस्य जयः परस्य पराजयश्च । परानुग्रहार्थमिति परस्य शिष्यादेः तत्त्वज्ञानं प्रति निश्चयोत्पादनद्वारेणानुग्रहः प्रसादः । यद्वा परस्य बौद्धादेरज्ञानान्धतमसमलीमसलोचना अमी नरकान्धकुहरे मा पतन्निति कृपया तत्त्वप्रकाशाद्योऽनुग्रहस्तदर्थं वा । ज्ञानाङ्कुरेत्यादि ज्ञानाङ्कुरः स्वात्मस्थः शिष्यादिस्थो वा तस्य बौद्धादिमृगीभ्यो रक्षणार्थं वा ।

वादिप्रतिवादीत्यादि । आरम्भको वादी । प्रत्यारम्भकः प्रतिवादी । क्षमामाध्यस्थ्यैश्वर्य्यबाहुश्रुत्यादिगुणग्रामाभिरामः सभापतिः । प्राश्निकाः पुनः

स्वसमयपरसमयज्ञाः कुलजाः पक्षद्वयेप्सिताः क्षमिणः ।
वादपथेष्वभियुक्तास्तुलासमाः प्राश्निकाः प्रोक्ताः ॥

इति लक्षणलक्षिताः । ते अङ्गं शरीरं यस्याः सा तथोक्ता । जल्पेत्यादि सा च जल्पसंज्ञा वितण्डासंज्ञा च प्रोक्ता प्राच्यप्रामाणिकैरिति शेषः । अत्र विजिगीषुकथालक्षणे विजिगीषुपदद्वयेन वादलक्षणोक्तवीतरागपदद्वयव्यवच्छेदः । लाभेत्यादि जयेत्यादि वाक्यद्वयेन च विजिगीषोः प्रयोजनकथनम् । परानुग्रहपदेन ज्ञानाङ्कुरेत्यादिपदेन च वीतरागविजिगीष्वोः फलकथनम् । चतुरङ्गेत्यादिपदेन त्र्यङ्गत्वादिव्यवच्छेदः । तेन चतुरङ्गैव विजिगीषुकथा कर्त्तव्येत्यावेदितमन्यथा जयपराजयव्यवस्थादौस्थ्यात् जल्प इति वितण्डेति वक्ष्यमाणस्वरूपे विजिगीषुकथाया एव विशेषसंज्ञाद्वयम् ॥ १४२ ॥

अत्रापि सूत्रसंवादं दर्शयति ।

तथा चाह तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदितीति ॥

तथा चाहेत्यत्र सूत्रकार इति शेषः । तत्त्वेत्यादि । तत्त्वानि प्रमाणादीनि तेषामध्यवसायो निश्चयः तस्य तत्त्वविप्लावकबौद्धादिभ्यो रक्षणाय जल्पवितण्डे प्रयोक्तव्ये । कोऽर्थः । तत्त्वमुपप्लूयमानं बौद्धादिवादिदुर्दुरूढं जल्पवितण्डाभ्यां खण्डयित्वा तत्त्वातव्यमिति । अत्र दृष्टान्तः । यथा बीजाङ्कुरः कण्टकितशाखावृतिकरणात् त्रायते तथेति ॥ १४२ ॥

प्राग्विजिगीषुकथा जल्पवितण्डासंज्ञोक्ता तत्र जल्पलक्षणं लक्षयति ।

यथोक्तलक्षणोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति ॥

यथोक्तेत्यादिविशेषणविशिष्टो जल्पो भवतीत्यन्वयः । यथोक्तेत्यादि । यथोक्तं यल्लक्षणं प्रमाणतर्कमात्रमर्थाद्वादस्य तेनोपपन्नो यः स तथोक्तः । छलजातीत्यादि । अर्थविकल्पोपपत्त्या वचनविघातः छलम् । स्वव्याघातकरमुत्तरं जातिः । पराजयनिमित्तं निग्रहस्थानम् । छलादिभिः स्वपक्षपरपक्षयोः साधनोपालम्भौ यत्र स तथा । छलादिपदोपादानं जल्पस्य वीतरागकथात्वव्यवच्छेदार्थम् । अयमर्थः । अत्र यथोक्तलक्षणोपपन्नग्रहणेन प्रमाणतर्कमात्रमुपलक्ष्यते । न सर्व्वं वादलक्षणम् । सिद्धान्ताविरुद्धः पञ्चा-

वयवोपपन्न इत्युत्तरपदद्वयस्य निग्रहस्थाननियमनिबन्धनस्यात्राभि-संबन्धासम्भवात् जल्पे समग्रनिग्रहस्थानानां सम्भवाच्च ।

ननु छलजातिनिग्रहस्थानसाधनोपालम्भ इत्ययुक्तं छलादीना-मसदुत्तरत्वेन साधनदूषणानुपपत्तेः । तदयुक्तं प्रमाणैः क्रिय-माणयोः साधनोपालम्भयोः छलादीनामङ्गभावो रक्षणार्थत्वान्न स्वतन्त्राणां साधनदूषणभावः । न हि तानि स्वयं साधनत्वेन दूषणत्वेन वा प्रयुज्यन्ते । किन्तु सम्यक् साधने प्रयुक्ते । परश्छलजात्यादिना प्रत्यवतिष्ठमानश्छलं जातिर्निग्रहस्थानं वा त्वया प्रयुक्तमित्येवं तदुद्भावनद्वारेण निरस्यति । निरस्ते च तस्मिन् स्वपक्षः परिरक्षितो भवति । परेण वा साधने प्रयुक्ते सहसा दोषमपश्यन् स्वयं जात्यादिना प्रत्यवतिष्ठते । जात्या-व्याकुलितश्च प्रतिवाद्युत्तरमप्रतिपद्यमानो जीयते । जिते तस्मिन्न प्रतिपक्षा स्वपक्षसिद्धिरिति । तथा क्वचिद्वीतरागस्यापि प्रमाणोप-पन्नतत्त्वत्राणाय च्छलादीन्युपयुज्यन्ते । अन्यथा स प्राञ्जलमति-त्वाद्वैतण्डिककृतदूषणाड़म्बरेण तत्त्वाध्यवसायात् प्रचाल्येतेत्यलं प्रसङ्गेन ॥ १४४ ॥

अथ वितण्डालक्षणं ताण्डवयति ।

स प्रतिपक्षस्थापनाहीनो वितण्डेति ॥

स यथोक्तो जल्पः । प्रतिपक्षस्थापनाहीनतया विशेषितो वितण्डात्वं प्रतिपद्यते । प्रतिपक्षस्थापनाहीनेति पदं जल्पेऽति-व्याप्तिनिषेधार्थम् । कोऽर्थः । वैतण्डिकस्य स्वपक्ष एव साधनवादि-पक्षापेक्षया प्रतिपक्षो हस्तिप्रतिहस्तिन्यायेन तस्मिन् प्रतिपक्षे

वितण्डिकी न साधनं वक्ति नवरं परपक्षप्रतिषेधायैव प्रवर्त्तत इति तत्कथा वितण्डा भवति ।

कश्चित् स इत्यनेन वादं परामृशति । ततः प्रतिपक्षः स्वपक्षः स्थाप्यते येन तत्प्रतिपक्षस्थापनं प्रमाणं तेन आ समन्तात् हीनो वादो वितण्डा भवतीत्येवं व्याचष्टे च ।

ततो वितण्डायां प्रतिपक्षस्थापनाहीनेति लक्षणस्य तं प्रतिपक्षहीनमपि वा कुर्य्यादिति वीतरागकथालक्षणस्य च मिथः संवादाद्वीतरागकथायामपि वितण्डा प्रतिपत्तव्येति यत् केनाप्युक्तं तदयुक्तम् । वीतरागकथायां वितण्डाश्रयणे तत्त्वनिर्णीत्यभावापत्तिस्तदर्थमेव तदारम्भादिति ॥ १४५ ॥

अलक्षितानि छलादीनि प्रयोक्तुं भंक्तुं वा न शक्यन्त इति प्राक् छलं लक्षयति ।

वचनविघातोऽर्थविकल्पोपपत्त्या छलमिति ॥

छल्यते परोऽनेनेति छलम् । किं तदित्याह । वचनविघातः परप्रयुक्तवचःखण्डनम् । कयार्थस्य वाच्यस्य विरुद्धत्वेन विकल्पनमर्थविकल्पस्तद्घटनया उल्लण्ठतया । वचनव्याघातेऽतिव्याप्तिनिषेधार्थं विकल्पोपपत्त्येति पदम् । अयमर्थः । वचनविघातो न सुखपिधानेनापित्वर्थविकल्पोपपत्त्या । वक्तुरनभिप्रेतमर्थं तदुक्ते वचस्यारोप्य च्छलवादी यत्तन्निषेधं करोति तच्छलं भवति ॥ १४६ ॥

इत्थं सामान्येन च्छलं लक्षयित्वा तद्विभजते ।

तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥

तत्सामान्यलक्षणलक्षितं छलं वाक्छलादिभेदेन त्रिधा भवति तत्र वाक्निमित्तमस्येति वाक्छलम्। एवं सामान्यच्छलादावपि विग्रहश्चिन्त्यः।

ननु यथा वाक्छलं वाग्निमित्तं तथेतरदपि च्छलद्वयं वाग्निमित्तमस्तीति तदपि तथैवोच्यतामिति चेत्। सत्यं परं तत्र सामान्योपचारयोः प्रधानत्वेन ताभ्यामेव व्यपदेशो न वाचा। व्यपदेशस्य प्रधानमूलत्वादिति॥ १४७॥

तत्र वाक्छलमाह।

*यथा अविशेषाभिहितार्थे वक्तुरभिप्रायापरिज्ञानादर्थान्तरकल्पना वाक्छलमिति॥

अनेकार्थवाचकं पदं वाक्यं वा अविशेषस्तस्यार्थाभिधानाय प्रयोगोऽप्युपचारादविशेषः। यद्वा द्व्यर्थस्य पदस्य वाक्यस्य वा एकतरार्थानिर्धारणेन यत्प्रतिपादनं सोऽविशेषस्तेनार्थेऽभिहिते सति। वक्तुरभिप्रायो विवक्षितः कश्चिदेकोऽर्थः। तदनवबोधादन्यार्थरचना सा वाक्छलं भवति। अर्थान्तरकल्पना वाक्छलमित्युक्ते परोक्तार्थपरिज्ञानादनु यार्थान्तरकल्पना सापि वाक्छलं स्यात्तन्निवृत्त्यर्थं वक्तुरभिप्रायापरिज्ञानादिति पदम्। निर्द्धार्य्यप्रतिपादितेऽर्थेऽतिव्याप्तिनिषेधार्थं अविशेषाभिहित इति पदम्॥ १४८॥

उदाहरति।

* The text reads "वक्तुरभिप्रायादर्थान्तर०" [ See p. 16. L. 13 ].

*नवकम्बलोऽयं माणवक इति उक्ते च्छलवाद्याह। कुतोऽस्य नवकम्बला इति॥

अयं माणवको बटुर्नवकम्बल इति वाद्युक्ते वाक्ये नवः कम्बलोऽस्य नव कम्बला अस्येति च समासपदमर्थद्वयेऽप्यविशिष्टं तत्राभिनवकम्बलयोगं वक्तुरभिप्रेतं प्रमाणोपपन्नं च परिज्ञाय नवसंख्यासंबन्धमध्यारोप्य तत्प्रतिषेधेन परः प्रत्यवतिष्ठते। कुतोऽस्य नवसंख्यकाः कम्बला इति। इत्थं ब्रुवाणेन चानेन वाक्छलमुद्भावितं भवति॥ १४९॥

परिहरति।

तस्याप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम्। नवः कम्बलोऽस्येति वक्तुरभिप्रायापरिज्ञानादिति॥

कुतोऽस्य नवकम्बला इति यो वाक्छलमुदभावयत्तस्य अप्रतिपत्तिरित्यज्ञानलक्षणं निग्रहस्थानं कथ्यम्। नवः कम्बल इति वक्तुराशयानवबोधादिति॥ १५०॥

निग्रहस्थानदाने हेत्वन्तरमाह।

उत्तरापरिज्ञानाद्वा विप्रतिपत्तेर्वा विपरीतज्ञानादिति॥

वादिप्रतिपादितस्य वाक्यस्योत्तरानवगमात् प्रागुक्तमप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम्। यद्वा वाद्युक्तस्य विप्रतिपत्तेर्विपरीतज्ञानान्निग्रहस्थानं वाच्यम्। वाकारौ प्रागुक्तनिग्रहहेतु-

---

* The word "यथा" is added before this in the text ( See page 16. Line 14 ).

समुच्चये। विपरीतज्ञानादिति पदं विप्रतिपत्तेरित्यस्यैव विवरण-रूपम् ॥ १५१ ॥

सामान्यच्छलमाह।

संभवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्य-च्छलमिति ॥

अति व्यापकं सामान्यमतिसामान्यं तद्योगात् क्वचिद्वक्त्रा-वर्थस्य कस्यचित् सम्भवतो व्यक्त्यन्तरेऽसंभाव्यमाननिष्पत्तेर्वक्त्रा-भिहितस्य सतो यदसद्भूतार्थकल्पनया प्रत्यवस्थानं तत्सामान्य-च्छलं भवति। वाक्च्छलेऽतिव्याप्तिनिषेधार्थमसद्भूतेति विशे-षणम् ॥ १५२ ॥

एतदुदाहरति।

अहो नु खल्वयं ब्राह्मणश्चतुर्वेदाभिज्ञ इत्युक्ते केनचित् न्यायवाद्याह। किमत्राश्चर्यं संभवति खलु ब्राह्मणे चतुर्वेदाभि-ज्ञत्वमिति। अत्र च्छलवाद्याह। न। व्रात्येनानैकान्तिकत्वा-दिति ॥

व्रात्येनेति। व्रात्यः संस्कारवर्जितो द्विजस्तेनानैकान्ताद्व्यभि-चारात्। शेषोऽक्षरार्थः सुगमः। भावार्थस्त्वेवम्। चतुर्वेदाभिज्ञत्वं प्रति ब्राह्मणत्वं न्यायवादिना साधनं विवक्षितमिति मत्वा छल-वादी अनैकान्तिकतामुद्भावयति। व्रात्ये ब्राह्मणत्वे सत्यपि चतु-र्वेदाभिज्ञत्वाभावात् त्वदुक्तोऽयं हेतुरनैकान्तिक इति। अयमिति निर्दिष्टपक्षेऽन्यस्मिन् ब्राह्मणवृन्दे सपक्षे व्रात्ये विपक्षे च ब्राह्मणत्व-हेतोर्गतत्वात्। पक्षत्रयवृत्तेरनैकान्तिकत्वाच्च। यस्मिन् कस्मिंश्चि-

ब्राह्मणे चतुर्वेदाभिज्ञत्वं भवतीत्यतिव्यापकसामान्ययोगात्संभावितं पुरोवर्त्तिद्विजे चतुर्वेदाभिज्ञत्वं व्रात्येऽसद्भावकल्पनया व्याहतमिति सामान्यच्छलमिदम् ॥ १५३ ॥

परिहरति।

तस्यापि पूर्व्ववन्निग्रहस्थानं वाच्यम्। कस्माद्धेतुत्वस्याविवक्षितत्वात्। किं तर्हि ब्राह्मणत्वे सति चतुर्वेदाभिज्ञत्वमाश्चर्य्यकारणं न भवतीत्यभिप्रेतं सुक्षेत्रे शालिसम्पत्तिवदितीति ॥

तस्येति सामान्यच्छलवादिनः। न केवलं वाक्छलवादिन इत्यपेरर्थः। पूर्ववदिति। वक्त्रभिप्रायापरिज्ञानादुत्तरापरिज्ञानाद्वा अप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यम्। कस्मादिति शिष्यप्रश्नः। हेतुत्वस्येति। यदि ब्राह्मणत्वं चतुर्वेदाभिज्ञत्वे हेतुत्वेनोपन्यस्तं भवेत्तदानैकान्तिकतोद्भावयितुं न्याय्या स्यान्नान्यथा। तर्हि ब्राह्मणत्वं किं विवक्षितमित्याह। किं तर्हीति। सम्भावनापूर्व्वकः प्रशंसावादोऽयमिति भावः। शालिदृष्टान्तः सुबोध एव ॥ १५४ ॥

उपचारच्छलमाह।

उपचारप्रयोगे मुख्यार्थकल्पनया प्रतिषेध उपचारच्छलमिति ॥

वाहीको गौरग्निर्माणवक इत्यादि लक्षणाप्रयोग उपचारः। तदुक्तं

मुख्यार्थबाधे तद्योगे रूढितोऽर्थप्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रियेति ॥

तत्प्रयोगे सति यस्य ध्वनेर्यः साक्षाद्वाच्यः स तस्य मुख्यो

यथा वृक्षशब्दस्य शाखादिमानर्थस्तत्कल्पनया तदवतारेण उपचार-प्रयोगस्य यः प्रतिषेधः स उपचारच्छलं भवति। अर्थकल्पनया प्रतिषेध उपचारच्छलमित्युक्ते वाक्छलादावतिव्याप्तिस्तत्परि-हृत्यै मुख्येति पदम्। मुख्यार्थकल्पना च गौणप्रयोगं विना न भवतीति उपचारप्रयोग इति पदम्॥ १५५॥

तन्निदर्शयति।

*मञ्चाः क्रोशन्तीत्युक्ते च्छलवाद्याह पुरुषाः क्रोशन्ति न मञ्चास्तेषामचेतनत्वादिति॥

क्षेत्रे धान्यरक्षणार्थं काष्ठघटिताश्चतुःस्तम्भरूपा मञ्चाः। क्रोशन्तीति शब्दायन्ते। शेषं सुगमम्॥ १५६॥

छलवादिनो दूषणं वक्ति।

†तस्यापि निग्रहस्थानं पूर्व्ववत्। उभयथापि लोके शास्त्रे च शब्दप्रयोगदर्शनादिति॥

तस्योपचारच्छलवादिनः पूर्व्ववत्पराभिप्रायापरिज्ञानादुत्तरा-परिज्ञानाद्विपरीतज्ञानाद्वा विप्रतिपत्तिलक्षणं निग्रहस्थानं वाच्यं भवति। अत्र हेतुः उभयथेत्यादि। मुख्यार्थतया खुरककुद-सास्नादिमति गोशब्दवत्। लक्षणया चायुर्घृतमिव प्रकारद्वयेन लोके श्रुते च शब्दे प्रवृत्तिदर्शनाल्लक्षणाप्रयोगे मुख्यार्थेन निषेधो न युक्त इत्यर्थः॥ १५७॥

---

* The word "यथा" is added before this in the text (See p. 17. Line 10).

† The reading adopted by the commentator here differs some-what from the text (See page 17. Line 12).

अथ क्रमप्राप्तं जातिलक्षणं प्रकटयति।

प्रयुक्ते हेतौ समीकरणाभिप्रायेण प्रसङ्गो जातिरिति॥

वादिना हेतौ साधने प्रयुक्ते युक्त्या व्यवस्थापिते सति समीकरणाभिप्रायेण परेण सहात्मनः साम्यापादनसंकल्पेन यः प्रसङ्गः प्रतिषेधोऽनिष्टापादनं वा सा जातिर्भवति। प्रसङ्गो जातिरित्युक्ते प्रत्यक्षाभासादावपि प्रसङ्गोऽस्ति न चासौ जातिस्ततो व्यावृत्त्यर्थं प्रयुक्ते हेताविति पदम्। प्रत्यक्षाभासादौ न खलु हेतौ प्रयुक्ते प्रसङ्गो भवति। तथाप्यसिद्धत्वादिप्रसङ्गः प्रयुक्ते हेतौ भवतीति तत्परिहृत्यै समीकरणाभिप्रायेणेति पदम्। असिद्धत्वाद्यापादनं हि परपक्षप्रतिक्षेपाय न पुनः स्वपक्षस्य परपक्षेण सह समीकरणाय। इदं तु जातेर्लक्षणं प्रायिकं प्राप्तयप्राप्तयादिजातिष्वभावात्। व्यापकं लक्षणन्त्विदं हेतुप्रतिबिम्बनप्रायं किमपि प्रत्यवस्थानं जातिः। तथाच मूलसूत्रं साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः। वादिना हेतौ व्यवस्थापिते सति साधर्म्येण वैधर्म्येण वा यत् प्रतिकूलमवस्थानं सा जातिरित्यर्थः॥ १५८॥

निग्रहस्थानं लक्षयति।

पराजयनिमित्तं निग्रहस्थानमिति॥

पराजयो हारिस्तस्य निमित्तं यदर्थाद्विप्रतिपत्तिरप्रतिपत्तिर्वा तन्निग्रहस्थानं भवति। तथाच सूत्रम्। विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्। विरुद्धा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिस्तत्त्वप्रतिपत्तेरभावोऽप्रतिपत्तिरिति। सकलनिग्रहस्थानानां सामान्यलक्षणमिदम्। निमित्तं निग्रहस्थानमित्युक्ते किमपेक्षा

स्यात्तन्निवृत्त्यर्थं पराजयेति पदम्। येन परः पराजीयते तन्निग्रहस्थानमित्यर्थः॥ १५९॥

अथानयोरशेषविशेषाभिधाने सामर्थ्याभावात् कतिपये भेदा भण्यन्त इत्याह।

बहवस्तयोः सूक्ष्मा भेदास्तेषां कियन्तो भेदा लक्षणोदाहरणाभ्यां प्रदर्श्यन्त इति॥

जातिनिग्रहस्थानयोरानन्त्यात् सर्वे भेदा वक्तुं न शक्यन्ते। ततः सूत्रोक्ता एव चतुर्विंशतिजातिभेदा द्वाविंशतिनिग्रहस्थानभेदाश्च लक्षयिष्यन्ते उदाहरिष्यन्ते च।

तत्र जातिसूत्रमेतत्। साधर्म्य १ वैधर्म्यो २ त्कर्ष ३ अपकर्ष ४ वर्ण्य ५ अवर्ण्य ६ विकल्प ७ साध्य ८ प्राप्ति ९ अप्राप्ति १० प्रसङ्ग ११ प्रतिदृष्टान्त १२ अनुत्पत्ति १३ संशय १४ प्रकरण १५ अहेतु १६ अर्थापत्ति १७ अविशेष १८ उपपत्ति १९ उपलब्धि २० अनुपलब्धि २१ नित्य २२ अनित्य २३ कार्य्य-समाः २४।

निग्रहस्थानसूत्रञ्चेदम्। प्रतिज्ञाहानि १ प्रतिज्ञान्तर २ प्रतिज्ञाविरोध ३ प्रतिज्ञासंन्यास ४ हेत्वन्तर ५ अर्थान्तर ६ निरर्थक ७ अविज्ञातार्थ ८ अपार्थक ९ अप्राप्तकाल १० न्यून ११ अधिक १२ पुनरुक्त १३ अननुभाषण १४ अज्ञान १५ अप्रतिभा १६ विक्षेप १७ मतानुज्ञा १८ पर्य्यनुयोज्योपेक्षण १९ निरनुयोज्यानुयोग २० अपसिद्धान्त २१ हेत्वाभासा २२ निग्रहस्थानानि।

तत्राननुभाषणा १ ज्ञाना २ प्रतिभा ३ विक्षेप ४ पर्य्यनु-

योज्यापेक्षणानि ५ अप्रतिपत्त्या संगृहीतानि शेषाणि विप्रति-पत्त्या ॥ १६० ॥

तत्र प्राक्साधर्म्यवैधर्म्यसमौ लक्षयति।

*साधर्म्यवैधर्म्याभ्यामुपसंहारे सिद्धे तद्धर्मविपर्य्ययोपपत्तेः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं साधर्म्यवैधर्म्यसमाविति ॥

साधर्म्येण अन्वयेन वैधर्म्येण व्यतिरेकेण वा। साधनमभि-धाय सिषाधयिषितपक्षोपसंहारे सिद्धे साधनवादिना कृते साध्य-धर्मस्यानित्यत्वादेर्विपर्य्यस्ततोपपादनार्थं साधर्म्येण वैधर्म्येण वा यत्प्रत्यवस्थानं तौ साधर्म्यवैधर्म्यसमौ जाती भवतः॥ १६१ ॥

एतावुदाहरति।

यथा अनित्यः शब्दः कृतकत्वात् घटवदित्युक्ते जाति-वाद्याह। यद्यनित्यघटसाधर्म्यात् कृतकत्वादनित्यः शब्द इष्यते नित्याकाशसाधर्म्यादमूर्त्तत्वान्नित्यस्तर्हि प्राप्नोति। यदि च नित्याकाशवैधर्म्यात् कृतकत्वादनित्य इष्यते घटाद्यनित्यवैधर्म्या-दमूर्त्तत्वात्तर्हि नित्यः प्राप्नोति विशेषाभावादिति ॥

न्यायवादिनाऽनित्यः शब्दः कृतकत्वात् घटवदिति साधर्म्येण हेतौ प्रयुक्ते जातिवादी साधर्म्येणैव प्रत्यवतिष्ठते।

ननु यथा कृतकत्वेन शब्दस्य घटस्य च साधर्म्यं तथा अमूर्त्त-त्वेन शब्दस्याकाशस्य च साधर्म्यमस्ति ततो यदि कृतकत्वात्

---

* The words सिद्धे and साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं are omitted in the text [ See page 18. Line 1 ].

घटवदनित्यः शब्दोऽभिलष्यते तर्ह्यमूर्त्तत्वादाकाशवन्नित्यः स्यात् । तथाहि शब्दो नित्योऽमूर्त्तत्वादाकाशवदिति । न चात्र विशेषः कश्चिद्येन घटसाधर्म्यात् कृतकत्वादनित्यः शब्दो न पुनराकाश-साधर्म्यादमूर्त्तत्वान्नित्य इति । एष साधर्म्यसमः प्रतिषेधः । यदि च नित्येत्यादि-साधर्म्येण प्रतिषेधे कृते वादिनाऽनित्यः शब्दः कृतकत्वात् यत् पुनर्नित्यं तदकृतकं दृष्टं यथाकाशमिति वैधर्म्येण साधने प्रयुक्ते च वैधर्म्येण परः प्रत्यवतिष्ठते । यदि त्वया शब्दो नित्याकाशवैधर्म्यात् कृतकत्वादनित्योऽभिप्रेयते तर्हि घटाद्यनित्यवैधर्म्यादमूर्त्तत्वान्नित्यः स्यात् । तथाहि नित्यः शब्दो-ऽमूर्त्तत्वाद्यत् पुनरनित्यं तन्मूर्त्तं दृष्टं यथा घट इति । न चात्रापि कश्चिद्विशेषो येन नित्याकाशवैधर्म्यात् कृतकत्वादनित्यः शब्दो न पुनर्घटाद्यनित्यवैधर्म्यादमूर्त्तत्वान्नित्य इति । एष वैधर्म्य-समः प्रतिषेधः । कश्चित्तु साधर्म्यसमे वैधर्म्यसमे च प्रत्येकं साधर्म्यवैधर्म्याभ्यां प्रतिषेधमिच्छति ॥ १६२ ॥

अनयोरुत्तरमुत्तरङ्गयति ।

अनयोरुत्तरमविनाभाविनः साधर्म्यस्य वैधर्म्यस्य च हेतुत्वा-भ्युपगमादप्रसङ्गो धूमादिवदिति ॥

भो जातिवादिन्न खलु साधर्म्यमात्राद् वैधर्म्यमात्राद्वा साध्य-सिद्धिर्भवति । किं त्वविनाभाविनः साधर्म्याद्वैधर्म्याच्च । अत्र यत् कृतकत्वं हेतुत्वेन विवक्षितं तदनित्यत्वेनाविनाभूतमेव । न हि कश्चिदर्थस्त्रिजगत्यपि सोऽस्ति यः कृतकः सन्नानित्यः । ततो यः कृतकः सोऽनित्य एव । यः पुनर्नानित्यः स कृतक एव नास्ती-

त्यन्वयव्यतिरेकाभ्यां अनित्यत्वेन सहाविनाभूतस्य कृतकत्वस्य साधनत्वस्वीकारात् साधर्म्यवैधर्म्यकृतोऽयं प्रतिषेधो न भवति। अत्र धूमादिवदिति दृष्टान्तः। यथाग्निमत्साधर्म्यानग्निमद्वैधर्म्याभ्यां निश्चिताविनाभावस्य धूमसाधनस्य प्रतिषेधो न भवति। तथात्रापीति दृष्टान्तार्थः। किं च त्वया नित्याकाशसाधर्म्यात् घटादनित्यवैधर्म्यादमूर्त्तत्वात् शब्दस्य नित्यत्वं साध्यते। तदमूर्त्तत्वं नित्यत्वेन सह किं विनाभूतमविनाभूतं वा। यदि विनाभूतं तर्ह्यतिप्रसङ्गः। काकस्य कार्ष्ण्याद्धवलः प्रासाद इत्यादीनामपि सम्यग्हेतुत्वानुषङ्गात्। अथाविनाभूतं तदयुक्तम्। अमूर्त्तत्वस्य नित्यत्वेन सहाविनाभावाभावात्। नह्येवमस्ति योऽमूर्त्तः स नित्य एव। यस्तु न नित्यः सोऽमूर्त्त एव न भवतीत्यन्वयव्यतिरेकौ बुद्ध्यादावमूर्त्तत्वेऽपि नित्यत्वाभावादिति ॥ १६२ ॥

उत्कर्षादीनां षसां जातीनां एकं लक्षणमाह ।

साध्यदृष्टान्तयोर्द्धर्म्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमा इति ॥

साध्यदृष्टान्तौ प्रतीतौ तयोः सावयवत्वादिधर्म्मकल्पनात् उत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसमा जातयो भवन्ति। तथा उभयोः साध्यदृष्टान्तयोः साध्यत्वापादनेन साध्यसमा जातिर्भवति। अयमर्थः साध्यधर्म्मिण्यसन्तमपि दृष्टान्तधर्म्ममारोप्योत्कर्षेण प्रत्यवस्थानमुत्कर्षसमा। दृष्टान्तधर्म्मविकल्पनेनैव साध्यधर्म्मिणि सिद्धस्यापि धर्म्मस्यापकर्षेण प्रत्यवस्थानमपकर्षसमा। वर्ण्यः ख्याप-

नीयः साध्यधर्म्मिधर्म्मस्तद्विपर्य्ययादवर्ण्यौ दृष्टान्तधर्म्मस्तयोर्वर्ण्या-वर्ण्ययोः परस्परसमीकरणेन प्रत्यवस्थानं वर्ण्यावर्ण्यसमे जाती। धर्म्मान्तरविकल्पेन प्रत्यवस्थानं विकल्पसमा। साध्यदृष्टान्तयोः साध्यत्वापादनेन प्रत्यवस्थानं साध्यसमा ॥ १६४ ॥

अथेदमेव सूत्रं विवरीतुमेकैकसूत्रलक्षणमाह।

साध्ये दृष्टान्तादनिष्टधर्म्मप्रसङ्ग उत्कर्षसम इष्टधर्म्मनिवृत्तिरपकर्षसम इति ॥

साध्ये धर्म्मिणि अनिष्टस्य वाद्यनभिप्रेतस्य धर्म्मस्य दृष्टान्ताद्यत्प्रसञ्जनं सोत्कर्षसमा जातिर्भवति। तथा दृष्टान्तात् साध्ये या इष्टस्य सिद्धस्य धर्म्मस्य निवृत्तिः सा अपकर्षसमा भवति ॥ १६५ ॥

एते उदाहरति।

*यदि कृतकत्वाद् घटवदनित्यः शब्दः तदा घटवदेव सावयवः स्यादथ नैवमनित्योऽपि तर्हि न स्यादविशेषात्। अश्रावणश्च घटो दृष्टः शब्दोऽपि श्रावणो न स्यादविशेषादिति ॥

अक्षरार्थः सुबोधः। भावार्थस्त्वयम्। घटः सावयवः शब्दस्तु निरवयवः ततो घटे यत् सावयवत्वं तच्छब्देऽनिष्टं तस्मिंश्च तत्वारोप्यमाणे उत्कर्षसमा जातिः। तथा अश्रावणात् घटात् शब्दस्य श्रावणत्वेऽपकृष्यमाणेऽपकर्षसमा जातिर्भवति ॥ १६६ ॥

वर्ण्यावर्ण्यसमे उदाहरति।

---

* The reading adopted by the commentator here differs somewhat from the text ( See page 18, Line 14-17 ).

*शब्दो यदि कृतकत्वानुमानेनानित्यो वर्ण्येत तथा सति घटोऽपि कृतकत्वानुमानेनानित्यो वर्ण्य इति वर्ण्यसमा। अथा-नवस्थाभयात् घटो नानुमानेनानित्यो वर्ण्येत ततः शब्दोऽप्यवर्ण्यः स्यादविशेषादिति॥

वर्ण्येत इति साध्येत। अनवस्थाभयादिति दृष्टान्तीकृतो घटो यदि कृतकत्वादनुमानेन वर्ण्येत तदा तत्र यो दृष्टान्तः सोऽपि तथा वर्ण्यः स्यात्तद्वर्णने चान्यो दृष्टान्तो वर्ण्य इत्यनव-स्थादौस्थ्यं स्यात्। शेषं स्पष्टम्॥ १६७॥

विकल्पसमामुदाहरति।

अथ विकल्पसमा। कृतकत्वाविशेषेऽपि यथा मूर्त्तत्वामूर्त्त-त्वादिधर्म्मविकल्पस्तथा नित्यत्वानित्यत्वविकल्पोऽपि स्यादविशेषा-दिति॥

साध्यदृष्टान्तयोः शब्दघटयोः कृतकत्वेन तौल्येऽपि यथा मूर्त्तत्वामूर्त्तत्वे अङ्गीकृते तथा शब्दे नित्यत्वं घटेऽनित्यत्वं चाङ्गी-क्रियताम्। न खलु कोऽपि विशेषोऽस्ति येनैकमङ्गीक्रियतेऽपरं त्यज्यते इति॥ १६८॥

साध्यसमोदाहरणं दर्शयति।

अथ साध्यसमा। यदि कृतकत्वादुभयोरनित्यत्वं तर्हि साध्यत्वमुभयोः स्यात्। न वा कस्यचिदविशेषादिति॥

---

* The reading adopted by the commentator here differs some-what from the text ( See page 19, Line 1-5 ).

उभयोरपि साध्यदृष्टान्तयोः शब्दघटयोः। अयमर्थः। यदि यथा घटस्तथा शब्दस्तर्हि यथा शब्दस्तथा घटोऽस्तु शब्दश्चानित्यतया साध्य इति घटोऽपि साध्य एव स्यात्। कथमन्यथा तेन तुल्यता ॥ १६९ ॥

षस्पां जातीनामेकमेवोत्तरमाह।

एतेषामुत्तरम्। किञ्चित्साधर्म्यादुपसंहारे सिद्धे वैधर्म्यादप्रतिषेध इति ॥

किञ्चित्साधर्म्याद्धूमवत्त्वादिरूपात् साध्यस्य वह्निमत्त्वादेरुपसंहारे उपनये दृष्टान्ते वा सिद्धे वैधर्म्यान्महानसे दृष्टस्थाल्यादिमत्त्वलक्षणादयं प्रतिषेधो न भवति। सर्व्वथा साधर्म्यस्य दृष्टान्तदार्ष्टान्तिकव्यवस्थाभञ्जकत्वात् ॥ १७० ॥

एतदेव सूत्रं स्वयं विवृणोति।

किञ्चित्साधर्म्याद्धूमवत्त्वादिलक्षणात्साध्यदृष्टान्तयोर्धर्म्मविकल्पेऽपि व्यवस्था दृष्टा तदपलापे लोकादिविरोधः। *सर्व्वानुमानानामप्रामाण्यप्रसङ्गश्चेतीति ॥

साध्यदृष्टान्तयोरिति वह्निमत्त्वमहानसयोर्धर्म्मविकल्पेऽपीति भासुरत्वतैजसत्व-दाहकत्वाद्युपरिवर्त्तिष्णुत्व-स्थाल्यादिमत्त्व-भूमिष्ठत्वादि-तुल्यातुल्यधर्म्मसम्भवेऽपि व्यवस्थेति। वह्निमत्त्वस्यैव सिद्धिर्दृष्टा। न तु सर्वेषां दृष्टान्तधर्म्माणाम्। नापि दृष्टान्तसर्व्वधर्म्मासिद्धौ प्रस्तुतस्यापि वह्निमत्त्वस्यासिद्धिर्लोकशास्त्रविरोधात्। एतदेवाह।

---

* The Text reads "सर्व्वानुमानात् प्रामाण्यप्रसङ्गश्च" (See page 19. Line 13-14).

तदपलापेत्यादि । तदपलापे किञ्चित्साधर्म्यात्साध्यसिद्धिव्यवस्थापह्नवे । लोकस्यादिशब्दात् प्रमाणशास्त्रस्य च विरोधः । दोषान्तरमप्याह । सर्वानुमानेत्यादि । किञ्चित्साधर्म्यात्साध्यसिद्ध्यनभ्युपगमे तन्मूलानां सर्वेषामनुमानानामप्रामाण्यमासज्येत । साध्यधर्म्मिणि सर्वेषां दृष्टान्तधर्म्माणां असम्भवात् ।

किञ्च त्वयापि जात्युत्थापनं किञ्चित्साधर्म्यात् सर्वथा साधर्म्याद्वा क्रियते । यद्याद्यः पक्षस्तर्हि कथमस्मत्पक्षं प्रतिक्षिपसि । अथ द्वितीयः तर्हि जातिरनुत्थानमेव कस्यचिदपि सर्वथा साधर्म्याभावात् ॥ १७१ ॥

प्राप्त्यप्राप्तिसमे जातौ आह ।

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्यविशिष्टत्वादप्राप्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमाविति ॥

वादिना हेतौ प्रयुक्ते जातिवाद्याह । अयं हेतुः प्राप्य साध्यं साधयेदप्राप्य वा । यदि प्राप्य तर्हि द्वयोर्लब्धस्वरूपयोर्युगपल्लम्भवात् कथमेकस्य साध्यतान्यस्य हेतुता विशेषाभावादिति प्राप्तिसमा जातिः । अथाप्राप्य हेतुः साध्यं साधयेत्तर्हि सर्वं साध्यं किं नासौ साधयेदविशेषात् । नह्यप्राप्य प्रदीपः प्रकाश्यं प्रकाशयतीत्यप्राप्तिसमा जातिर्भवति ॥ १७२ ॥

सूत्रस्यामुमेवार्थमाह ।

यद्ययं हेतुः प्राप्य साध्यं साधयेदुभयोः प्राप्त्यविशिष्टत्वादङ्गुल्योरिव किं कस्य साधनं साध्यञ्चेति । अप्राप्यसाधको नास्ति काष्ठाग्निवदिति ॥

हेतुः प्राप्य साध्यं साधयत्यप्राप्य वेति पक्षद्वयम्। तत्राद्यं पक्षं व्याख्याति यद्ययं हेतुरित्यादिना। उभयोरिति साध्यसाधनयोः। प्राप्तिः संयोगरूपा तयाऽविशिष्टत्वं द्वयोरेकीभावेन तुल्यत्वं तस्मात्। अङ्गुल्योरिवेति यथाङ्गुल्योरेकत्रमिलितयोः साध्यसाधनभावो न स्यात्तथा साध्यहेत्वोरपीत्यर्थः।

द्वितीयं पक्षं व्याख्याति। अप्राप्येत्यादिना। अयं भावः। यदि प्राप्तिपक्षोऽभ्युपगम्यते तदा न साध्यसाधनभावो द्वयोरङ्गुल्योरिवैकत्र मिलितत्वात्। अथाप्राप्तिपक्षस्तथापि न साध्यसाधनभावो वह्न्यादीनां काष्ठादि प्राप्यैव दाहकत्वादिदर्शनादिति ॥ १७३ ॥

अनयोः परिहारमाह।

घटादिनिष्पत्तिदर्शनात् पीड़ने चाभिचारादप्रतिषेध इति ॥

प्राक् प्राप्तिपक्षदोषं परिहरति घटादीत्यादिना। प्राप्त्रविशेषेऽपि चक्रचीवरादयो मृत्पिण्डं प्राप्यैव घटादिकमुत्पादयन्तो दृदृशिरे नाप्राप्य। घटादीत्यत्रादिशब्दाद्दीपादिग्रहस्तेषामपि घटादिकं प्राप्यैव प्रकाशकत्वात्। अप्राप्तिपक्षदोषं प्रतिक्षिपति। पीड़नेत्यादि। अभिचारादिकर्म्माप्राप्यापि दविष्ठं दुष्टं पीड़यत् दृश्यते। ततो नायं प्रसङ्गः। अयं भावः। नायमेकान्तो यत् हेतुः प्राप्यैव साध्यमप्राप्यैव वा साधयतीति किन्तु दीपादिकं किञ्चित्प्राप्य कार्म्मणादिकमप्राप्य च साध्यं साधयति। ततस्त्वदुक्तौ प्रसङ्गौ न स्याताम् ॥ १७४ ॥

अस्यैवोत्तरसूत्रस्य रहस्यमाह।

*प्राप्तग्प्राप्तविशेषेऽपि प्रतिनियतार्थवृत्तय एवैते साध्यसाधनत्वादयो धर्म्मा दृष्टास्ते निराकर्त्तुमशक्याः। सर्व्वप्रमाणविरोधादिति॥

यद्यपि केचन हेतवः प्राप्य साधकाः केचिदप्राप्य तथाप्यमी साध्यसाधनत्वादयो वह्निमत्त्वधूमवत्त्वादयो धर्माः प्रतिनियतार्थवृत्तयो निश्चितस्वाश्रयव्यापारा दृष्टा यथा धूमवत्त्वे सत्येव वह्निमत्त्वं कृतकत्वे सत्येवानित्यत्वं वा ते च तादृशाः प्रतिक्षेप्तुं न शक्यन्ते। सर्वेषां प्रत्यक्षादिप्रमाणानां विरोधात्। प्रत्यक्षादिप्रमाणैर्हि हेतुः कोऽपि साध्यं प्राप्य कोऽप्यप्राप्य साधको दृष्टः। ततो यद्येकान्तोऽभ्युपगम्यते तदा प्रत्यक्षादिविरोधो भवत्येव। दृष्टापलापश्च। किं चायं प्रतिषेधो हेतुं प्राप्याप्राप्य वा प्रतिषेधयति। यदि प्राप्य तर्हि द्वयोरेकीभूतयोः किं कस्य प्रतिषेध्यं प्रतिषेधकञ्च स्यादविशिष्टत्वात्। अथाप्राप्य तर्हि अप्राप्यसाधको नास्तीति कथमयं प्रतिषेधस्तावको भवति॥ १७५॥

अनुत्पत्तिसमां लक्षयति।

प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम इति॥

शब्दस्योत्पत्तेः प्रागनित्यत्वे कारणाभावात् तस्य चोत्पत्त्ययोगादनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमा जातिर्भवति॥ १७६॥

अस्यैव सूत्रस्य सोदाहरणं विवरणमाह।

* The text reads "प्राप्तग्प्राप्तिविशेषेऽपि" (See page 20. Line 3).

* अनित्यः शब्दः कार्य्यत्वादित्युक्ते प्रागुत्पत्तेरनित्यत्वे कारणं नास्तीति नित्यः प्रसक्तस्तस्योत्पत्तिरनुपपन्नेति ॥

शब्दोऽनित्यः कार्य्यत्वादिति वादिना प्रोक्ते जातिवादी प्रत्यवतिष्ठते । शब्दो यद्यनित्यः तर्हि शब्दोत्पत्तेः प्रागनित्यत्वे किमपि कारणमस्ति नो वा । न तावदस्तीति वक्तुं शक्यमनित्यत्वं प्रत्युत्पत्तेरेव कारणत्वादुत्पत्तेः प्राक् विचार्य्यमाणत्वात् । नास्तीति चेत्तर्ह्यनित्यत्वे कारणस्य कार्य्यत्वरूपस्याभावात् शब्दो नित्यः प्रसजति ।

ननूत्पन्नः सन् शब्दोऽनित्यो भविष्यतीत्याह । तस्येति । तस्य शब्दस्योत्पत्तिरयुक्तैव नित्यत्वात् ॥ १७७ ॥

एतद्दोषपरिजिहीर्षया प्राह ।

तथाभावादुत्पन्नस्य शब्दस्य कारणोपपत्तेरप्रतिषेध इति ॥

तथाभावादनित्यभावादुत्पन्नस्य शब्दस्य कारणमनित्यत्वसाधको हेतुरर्थादुत्पत्तिस्तद्घटनातोऽयं प्रसङ्गो न भवति । कोऽर्थः । शब्दः समुत्पद्यमानोऽनित्यत्वेनैवोत्पद्यते । ततोऽनित्यो भवत्येव । कश्चिदिमं ग्रन्थमन्यथा योजयति । उत्पन्नस्य शब्दस्य तथाभावादुत्पत्तिसद्भावात् कारणोपपत्तेरनित्यत्वसाधकहेतूपपत्तेरयं प्रतिषेधो न भवतीति ॥ १७८ ॥

ननु तथापि उत्पत्तेः प्राक् शब्दस्यानित्यत्वे न कश्चिद्धेतुरस्तीति । शब्दो नित्य एवेत्याशङ्क्याह ।

---

* The text reads प्रागुक्तेः instead of प्रागुत्पत्तेः and प्रसक्तस्योपपत्तिः instead of "प्रसक्तस्तस्योत्पत्तिः" [ See page 20. Lines 8-9 ].

अनुत्पन्नः शब्द एव नास्ति कस्य नित्यत्वादिधर्मश्चिन्त्यते इति ॥

नन्वनित्यत्वं नाम शब्दस्य धर्मः स च शब्दे सति सम्भवति। नान्यथा। शब्दस्योत्पन्न एव भवत्यत उत्पत्तेः प्रागनुत्पन्नः शब्द एव नास्ति। नित्यत्वादिधर्म्मः कस्य चिन्त्यते। धर्म्मिणं विना धर्म्मस्यासम्भवात्। किञ्च। हेतूपन्यासात् प्राक् प्रसङ्गस्योत्पत्तेः कारणाभावादस्याप्यनुत्पत्तिरेव। तथाहि हेतूत्पत्तेः प्राक् प्रसङ्गो नास्त्येव हेतावुत्पन्ने तु तस्योत्पत्तिरनुपपन्नैवेति ॥ १७९ ॥

अहेतुसमां जातिमाह।

त्रैकाल्यासिद्धेर्हेतोरहेतुसम इति ॥

हेतोः साधनस्य त्रैकाल्ये वृत्ते वर्त्स्यति वर्त्तमाने च काले सिद्धेरनुपपत्तेर्हेत्वभावेन प्रत्यवस्थानमहेतुसमा जातिर्भवति ॥ १८० ॥

एतदेव विवृणोति।

यदि पूर्वं साधनमसति साध्ये कस्य साधनमथ पश्चादविद्यमाने कथं साधनमथ युगपत्तथापि किं कस्य साधनं साध्यं वा द्वयोस्तुल्यकालत्वादिति ॥

सम्यक् साधने प्रयुक्ते दूषणमपश्यन् जातिवाद्याह। साधनं साध्यात् पूर्वमुत पश्चादथ युगपद्वेति। यदि पूर्वमिति साध्यात्प्राक्। अविद्यमानमिति साध्यकाले इति शेषः। द्वयोरिति द्वयोः साध्यसाधनयोरेकीभूतयोः सतोः सह्यविन्ध्ययोरिव साध्यसाधनभावासम्भव इत्यर्थः ॥ १८१ ॥

परिहरति।

*न हेतुतः साध्यसिद्धेः प्रवृत्त्यादिविरोधः सूत्रार्थ इति ॥

साध्यस्य कार्य्यस्य हेतुत एव सिद्धेर्निष्पत्तेरयं प्रतिषेधो न भवति।

ननु यदि हेतोः साध्यसिद्धिर्न भवेत्तर्हि को दोषः स्यादित्याह प्रवृत्त्यादीति। यदि हेतुतः साध्यसिद्धिर्न स्वीक्रियते। तदा प्रवृत्तेरादिशब्दान्निवृत्तिव्यवहारादेश्च विरोधः स्यात्। लोको हि मृदादिहेतुतः कुटादिनिष्पत्तिं निर्णीय तद्ग्रहणाय प्रवर्त्तते तदन्यस्मान्निवर्त्तते च। ततो हेतुतः साध्यसिद्ध्यस्वीकारे प्रवृत्तिनिवृत्ती सर्वथा विरुध्येयाताम्। सूत्रार्थ इति हेतुतः साध्य-सिद्धिरिति सूत्रस्यायमर्थ इत्यर्थः॥ १८२ ॥

इतोऽपि हेतुप्रतिषेधो न भवतीत्याह।

प्रतिषेधानुत्पत्तिश्च† त्रैकाल्यसिद्धेरिति ॥

त्रैकाल्येऽपि जातिवाद्युक्तप्रतिषेधासिद्धेर्हेतुप्रतिषेधस्यानुपपत्ति-रेव। तथाहि।

ननु जातिवादिन् यस्त्वयायं प्रतिषेधोऽभिधीयते। स प्रति-षेध्यात् पूर्वमुत पश्चादाहोस्विद्युगपदेति। तत्र नाद्यः कल्पः। यदि पूर्वमसति प्रतिषेध्ये कस्यायं प्रतिषेधः स्याद्धर्मिणं विना धर्मस्यानुप-पत्तेः। अथ पश्चात्तर्ह्यसति प्रतिषेधे कथं प्रतिषेध्यं प्रतिषेधाधि-

---

* The text adds अस्योत्तरम्। before the aphorism adopted by the commentator here (See page 20. Line 15).

† नुत्पत्तिश्च for नुपपत्तिश्च ?

ष्ठितत्वात् प्रतिषेध्यस्य। अथ युगपत्तथापि सव्येतरगोविषाणयोरिव किं कस्य प्रतिषेध्यं प्रतिषेधकञ्च स्यात्। एककालत्वेनाविशेषात् प्रतिषेध्यप्रतिषेधकयोश्च भिन्नकालत्वात्। इति प्रतिषेधस्य त्रैकाल्यासिद्धेर्हेतुप्रतिषेधो न स्यादित्यर्थः॥ १८३॥

ननु यद्यपि त्रैकाल्येऽपि प्रतिषेधासिद्धिस्तथापि तव हेतु-सिद्धिर्नास्तीत्याशङ्क्याह।

स्ववचनेनैव प्रतिषेधासिद्धौ हेतुसिद्धिरिति सूत्रार्थ इति॥

पूर्वोक्तयुक्त्या त्वदुक्तवचनेनैव त्रैकाल्येऽपि प्रतिषेधानिष्पत्तौ हेतुसिद्धिर्जातैव। सूत्रार्थ इति। प्रतिषेधानुपपत्तीत्यादि सूत्र-स्यायमर्थ इत्यर्थः॥ १८४॥

अविशेषसमां जातिमाह।

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेर-विशेषसम इति॥

एकस्य कार्य्यत्वादिलक्षणस्य धर्म्मस्योपपत्तेर्घटनातो यदि घटशब्दयोरविशेषस्तौल्यमिष्यते तदा सर्वभावानां सद्भावस्य स-त्त्वधर्म्मस्योपपत्तेः सर्वाविशेषेण प्रत्यवस्थानमविशेषसमा जाति-र्भवति॥ १८५॥

एतदेव सूत्रं विवृणोति।

यदि घटशब्दयोरेकस्य कार्य्यत्वस्योपपत्तेरनित्यत्वेनाविशेष इष्यते। तदा सर्वभावानां सद्भावोपपत्तेरविशेषः प्रसज्यत इति॥

प्रागेव व्याख्यातप्रायमेतत्॥ १८६॥

एतत्परिहरति।

*तत्रेदमुच्यते। सर्वथाविशेषे प्रत्यक्षविरोधः। अनित्यत्वेनाविशेषे त्वनुमानविरोधः। केनचिदविशेषे प्रमेयत्वादिना सिद्धसाधनमिति ॥

भो जातिवादिन् यस्त्वयास्मद्धेतोरविशेषः समापाद्यते स किं सर्वथा उतानित्यत्वेन आहोस्वित् केनचिद्धर्मेण। तत्राद्ये कल्पे प्रत्यक्षप्रमाणविरोधः। प्रत्यक्षेण घटपटादीनां भेदोपलम्भात्। द्वितीयकल्पेऽनुमानविरोधस्तेनात्मादीनां नित्यत्वेन बुद्ध्यादीनामनित्यत्वेन च साधितत्वात्। तथा ह्यात्मादिर्नित्यो अनादिनिधनत्वाद्व्यतिरेके घटादिवत्।

तृतीये कल्पे प्रमेयत्वादिना यद्यविशेषः उच्यते। तर्हि सिद्धस्यैव साधनम्। प्रमेयत्वेनादिशब्दात् सत्त्वसपक्षत्वादिना च सर्वाविशेषस्येष्टत्वात् ॥ १८७ ॥

उपलब्धिसमामाह।

निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसम इति ॥

निर्दिष्टस्य साध्यधर्म्मसिद्धिकारणरूपस्याभावेऽपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमा जातिर्भवति ॥ १८८ ॥

एतदेव सूत्रं व्याचष्टे।

पृथिव्यादिषु कार्य्यत्वसिद्धये निर्दिष्टस्य सावयवत्वस्याभावेऽपि बुद्ध्यादौ कार्य्यत्वमुपलब्धमिति ॥

---

* The Text reads अनुमानागमविरोधः instead of अनुमानविरोधः ( See page 21. Line 8 ).

पृथिव्यादिकं कार्य्यं सावयवत्वात् घटवदिति वादिना प्रोक्ते। जातिवाद्याह। पृथिव्यादौ कार्य्यत्वसिद्ध्यर्थं हेतुतयोपन्यस्तं यत् सावयवत्वं तदभावेऽपि बुद्धौ आदिशब्दात् सुखे दुःखे च कार्य्यत्वं दृष्टं बुद्ध्यादीनाममूर्त्तत्वात् कार्य्यत्वाच्च। ततोऽप्रयोजकोऽयं सावयवत्वहेतुः। पृथिव्यादेः कार्य्यत्वसिद्धावित्युपलब्ध्या प्रतिषेध उपलब्धिसमो भवति ॥ १८९ ॥

परिहरति।

सपक्षैकदेशस्यापि धूमादेर्गमकत्वदर्शनादप्रतिषेध इति ॥

हेतुर्द्विधा सर्व्वपक्षव्यापी सपक्षैकदेशवृत्तिश्च। अत्र सपक्षैकदेशे वर्त्तमानो हेतुः सपक्षैकदेश इत्युक्त उपचारात्। यद्वा सपक्षस्यैको देशो यस्यासौ सपक्षैकदेश इति भिन्नाधिकरणो बहुव्रीहिः। ततः सपक्षैकदेशव्यापकस्यापि धूमादेः साधनस्य साध्यगमकत्वावलोकनादयं सावयवत्वहेतुप्रतिषेधो न भवति। कोऽर्थः। यथा पर्वतोऽयं वह्निमान् धूमवत्त्वान्महानसवदित्यत्र धूमानुमाने न खलु धूमवत्त्वं सपक्षभूतं समस्तमपि महानसस्तोममास्तिघ्नुते किं महानसकतिपयानि तथापि वह्निमत्त्वगमकं भवत्येव। तथा सावयवत्वं कार्य्यत्वेन सपक्षभूते बुद्ध्यादौ च प्रवर्त्तमानमपि पृथिव्यादौ कार्य्यत्वसाधकं भविष्यति दोषाभावात्। किञ्च यदि सर्वसपक्षव्याप्येव हेतुर्गमकोऽभिलष्येत तदा एकदेशव्यापिनां धूमादिहेतूनामगमकत्वे सति तन्मूलवह्न्यनुमानोच्छेदोऽनुषज्येत। ततो यथैकदेशव्यापिनो धूमादेर्गमकत्वं तथा सावयवत्वस्यापि ॥ १९० ॥

आशङ्कापुरःसरं सूत्रोक्तार्थं विवृणोति।

कथं तर्हि बुद्ध्यादेः कार्य्यत्वसिद्धिरत आह कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेध इति॥

यदि सावयवत्वं बुद्ध्यादौ न प्रवर्त्तते। तर्हि साधनं विना साध्यसिद्ध्ययोगात् बुद्ध्यादेः कथं कार्य्यत्वसिद्धिरित्याशङ्कार्थः। अत आहेति ग्रन्थकारः। कारणान्तरात् सावयवत्वादन्यस्माद्धेतोः कार्य्यत्वधर्मोपपत्तेरयं प्रतिषेधो न भवति॥ १९१॥

कारणान्तरादिति पदं व्याचष्टे।

प्रमाणान्तरादपि कार्य्यत्वसिद्धेरित्यर्थं इति॥

यथाङ्गारावस्थायां धूमाभावेऽपि प्रमाणान्तराद्वह्निसिद्धिस्तथात्रापि कार्य्यत्वसिद्धिर्भविष्यतीति॥ १९२॥

प्रमाणान्तरमेव दर्शयति।

प्रमाणं चानुपलब्धिकारणेष्वसत्सु प्रागूर्द्ध्वं चानुपलम्भादिति॥*

प्रमाणमिति बुद्धेः कार्य्यत्वसाधकमनुमानम्। उपलब्धिकारणानि बुद्धेर्ज्ञप्तिनिमित्तानि हानोपादानादीनि। न उपलब्धिकारणान्यनुपलब्धिकारणानि। तेष्वसत्स्वविद्यमानेषु। द्वौ नञौ प्रकृतमर्थं गमयत इति न्यायात्। यद्यनुपलब्धिकारणानि न सन्ति तर्ह्युपलब्धिकारणानि सन्तीत्यर्थः। स्यात्तत उपलब्धिकारणेषु सत्सु उपलब्धिकालात् प्रागूर्द्ध्वं चानुपलम्भात् बुद्ध्यादिकं कार्य्यं

---

* The text adds घटादिवत् to the aphorism adopted by the commentator here ( See page 22. Line 1 ).

भवतीति शेषः। प्रयोगस्त्वेवं बुद्ध्यादि कार्य्यमुपलब्धिकारणेषु सत्सु प्रागूर्द्ध्वमनुपलभ्यमानत्वात्। उपलब्धिकारणेषु सत्सु प्रागूर्द्ध्वं यन्नोपलभ्यते तत्कार्य्यम्। यथा घटादि तथा चेदम्। तस्मात्कार्य्यमिति। उपलब्धिकारणाभावे सदपि वस्तु नोपलभ्यत इत्युपलब्धिकारणेषु सत्स्विति पदम्। ततो यथा कुड्याद्यभावे प्रागूर्द्ध्वं चानुपलभ्यमानत्वात् घटादिकं कार्य्यं तथा बुद्ध्याद्यपीत्यर्थः ॥ १८३ ॥

अस्मिन्नेव बुद्ध्यादिकार्य्यत्वसाधके हेतौ अनुपलब्धिसमामुद्भावयितुमाह।

तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसम इति॥

तस्य बुद्ध्यादिकार्य्यस्य प्रागूर्द्ध्वं यानुपलब्धिः सा तदनुपलब्धिस्तस्या अनुपलम्भादप्राप्तेरभावसिद्धौ नास्तित्वसद्भावे तद्विपरीतानुपलब्धिविपरीता उपलब्धिः प्रागूर्द्ध्वमपि बुद्ध्यादिसद्भावस्तदुपपत्तेरनुपलब्ध्या प्रत्यवस्थानमनुपलब्धिसमा जातिर्भवति।

अयं भावः। बुद्ध्यादेः प्रागूर्द्ध्वं यानुपलब्धिः सा स्वात्मनि वर्त्तते न वा। वर्त्तते चेत्तदा यत्र विषयेऽनुपलब्धिर्वर्त्तते तस्य यथानुपलम्भस्तथानुपलब्धेरप्यनुपलम्भः स्यात्। अनुपलब्धेस्त्वानुपलम्भ उपलब्धिरूपो भावाभावयोरभावस्य विरुद्धात्मकत्वात्। भावस्याभावोऽभावः अभावस्याभावो भावः। तथाच या बुद्ध्यादिकार्य्यस्य प्रागूर्द्ध्वमनुपलब्धिरुक्ता तस्याश्चेदनुपलब्धिस्तर्हि तद्विपरीतोपलब्धिः प्राप्ता। यत्र चोपलब्धिस्तत्रोपलम्भस्ततो बुद्ध्यादेः कार्य्यस्य प्रागूर्द्ध्वमप्यस्तित्वं स्यात्। अनुपलब्धिः स्वात्मनि न वर्त्तते

चेत्तर्ह्यनुपलब्धिस्वरूपेणापि नास्ति। तथाप्यनुपलब्धेरभाव उपलब्धिरूपस्ततोऽपि बुद्ध्यादिकार्य्यस्य प्रागूर्द्ध्वमप्यस्तित्वं स्यात् इति॥ १८४॥

अमुमेवार्थं मनसिकृत्य सूत्रं व्याचष्टे।

*तस्य बुद्ध्यादिकार्य्यस्यानुपलब्धेरनुपलम्भादभावसिद्धौ अनुपलब्धेर्विपरीतोपलब्ध्युपपत्तेः। प्रागूर्द्ध्वमपि बुद्ध्यादेः सद्भावः सेत्स्यतीत्यभिप्राय इति॥

सूत्रव्याख्यानादिदं व्याख्यातप्रायम्। अनुपलब्धेरनुपलब्धिरूपलम्भरूपो भवन् प्राक् पश्चाच्च बुद्ध्यादिकमस्तीति व्यनक्ति। ततो बुद्ध्यादेः कार्य्यत्वसाधको हेतुरसिद्ध इत्यर्थः॥ १८५॥

एतदुत्तरमाह।

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुरिति॥

अनुपलब्धेरनुपलम्भात्मकत्वान्नास्तित्वरूपवेद्यत्वादियं बुद्ध्याद्यनुपलब्धेरभावसाधिकानुपलब्धिरहेतुर्बुद्ध्यादेः कार्य्यत्वनिषेधे हेतुर्न भवति। अयं भावः। अनुपलब्धिरनुपलम्भात्मिका न च तस्या अनुपलब्धेः स्वरूपमेव विषयः। यद्यनुपलब्धेः स्वरूपमपि विषयः स्यात्तर्हि यत्रार्थेऽनुपलब्धिस्तस्य यथाऽसत्त्वं तथानुपलब्धेरपि स्वरूपनाशादसत्त्वं स्यान्न च तथास्ति किन्तु वस्त्वनुपलम्भविषया। ततो बुद्ध्यादेः कार्य्यत्वनिषेधेऽसौ हेतुर्न भवति।

---

* The reading adopted by the commentator here, differs somewhat from the text ( See page 22, Line 3-4 ).

किञ्च निषेधकप्रमाणेनोपलभ्यं नास्तीत्यवधार्य्यते। न चानुपलब्धिः स्वस्मिन्निषेधकं प्रमाणम्। तथाच स्वविषये सामर्थ्ये सति स्वात्मनिषेधत्वसामर्थ्येऽपि न काचित् चतिः॥ १८६॥

अमुमेवार्थं समर्थयति।

नास्तीति ज्ञानमनुपलब्धिः। सा तत्स्वभावतया प्रत्यात्मवेद्या। तदनुपलब्धिरसिद्धेत्यभिप्राय इति॥

भो जातिवादिन् अनुपलब्धिः स्वात्मनि वर्त्तते न वेति यद्विकल्पद्वयं पर्य्यकल्पि तदत्यल्पम्। यतो नास्तीति ज्ञानमभावरूपो बोधोऽनुपलब्धिः। सा चानुपलब्धिः तत्स्वभावतया नास्तीति रूपतया प्रत्यात्मवेद्या प्रतिप्राणिज्ञेया। न पुनः सा स्वस्मिन् वर्त्तित्वा स्वस्या एव विनाशिका। येन तस्याः स्वरूपमेव न स्यात्। ततो यथोपलब्धिर्विधिमुखेन तथानुपलब्धिर्निषेधमुखेन विद्यत इति अनुपलब्धिरसिद्धैव।

किञ्चेदमस्मद्धेतुप्रतिषेधकं भवद्वचः स्वस्मिन् वर्त्तते न वा। वर्त्तते चेत्तर्हि यत्र विषये प्रतिषेधकवचस्तस्य यथा प्रतिषेधस्तथा स्वात्मनोऽपि प्रतिषेधः। ततो हेतुप्रतिषेधकवचःप्रतिषेधे हेतुसिद्धिः सुस्थैव। न वर्त्तते चेत्तदा स्वरूपमपि प्रतिषेधकवचसो नास्तीति हेतुसिद्धिस्तदवस्था॥ १८७॥

नित्यसमां जातिमाह।

नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यत्वसम इति॥

नित्यमनित्यभावात् सर्वदाऽनित्यत्वाख्यधर्म्मास्तित्वादनित्यत्वयोगादनित्ये शब्दे नित्यत्वोपपत्तेर्नित्यत्वेन प्रत्यवस्थानं नित्यसमा

जातिर्भवति । अयमर्थः । अनित्यः शब्द इत्युक्ते जातिवादी अनित्यत्वाख्यसाध्यधर्म्मस्वरूपविकल्पनेन शब्दस्य नित्यत्वमापादयति । तथाहि किमिदमनित्यत्वं शब्दस्य नित्यमनित्यं वा । यदि नित्यं तर्हि धर्म्मस्य नित्यत्वात्तदाश्रयस्यापि शब्दस्य नित्यभावादनित्यधर्माधारतया सत्त्वान्नित्यत्वम् । अथानित्यं तत्राप्यनित्यत्वेऽनित्ये सिद्धं नित्यत्वं शब्दस्येति ॥ १९८ ॥

इदमेव सूत्रं व्याख्याति ।

अनित्यत्वधर्मस्य नित्यं सर्वदा सद्भावाद्धर्मिणोऽपि शब्दस्य सर्वदा सद्भावः । अथानित्यत्वं सर्वदा नास्ति तथाप्यनित्यत्वान्नित्यः शब्द इति ॥

अनित्यत्वधर्मो यदि नित्यस्तदा धर्मिणः शब्दस्यापि नित्यत्वं स्यादनित्यत्वस्य धर्म्मत्वाद्धर्म्मस्य च धर्मिणं विनावस्थानाभावादिति शेषः । अथानित्यत्वं धर्मो यदि सर्वदा नास्ति तथाप्यनित्यत्वस्यानित्यत्वाच्छब्दो नित्य एव ॥ १९९ ॥

अस्योत्तरमाह ।

अनित्यत्वस्य सर्वदाभ्युपगमे नित्यत्वविरोधः । अनभ्युपगमे चासिद्धो हेतुरिति ॥

भो जातिवादिन्ननित्यत्वं नित्यमनित्यं वेति प्रश्नयतस्तव कोऽभिप्रायः । किमनित्यत्वं सर्वदाभ्युपगच्छसि । अथ सर्वथा नाभ्युपगच्छसि वा ।

नाद्यः कल्पः । अनित्यत्वस्य सर्वदा स्वीकारे नित्यत्वं विरुध्येत । नित्यानित्ययोः परस्परं विरुद्धत्वादेकसद्भावेऽन्यस्या-

भावाच्च। न द्वितीयः अनित्यत्वस्य सर्वथानभ्युपगमे नित्यमनित्य-भावादिति भवदुक्तो हेतुरसिद्धो नित्यत्वस्य मूलत एवास्वीकारात्। ततः शब्दस्यानित्यत्वं तदवस्थमेवेत्यर्थः॥ २००॥

अधुना धर्म्मस्यावस्थानाद्धर्म्मिणोऽप्यवस्थानमिति यदुक्तं तत् परिहरति।

प्रध्वंसश्चानित्यत्वं न तस्मिन् सति शब्दसद्भाव इति॥

नित्यमनित्यत्वभावादनित्यत्वाधारस्य शब्दस्य नित्यत्वं तदा भवेत् यद्यनित्यत्वं भावात्मकं भवेदनित्यत्वं तु प्रध्वंसरूपं तस्मिन् सति कथं शब्दसद्भावः स्यात्। किञ्च त्वां प्रत्यप्येवं वक्तुं शक्यम्। त्वदभिप्रेतं यन्नित्यत्वं तत् किं नित्यमनित्यं वा। यदि नित्यं तर्हि नित्यत्वे यन्नित्यत्वं तदपि किं नित्यमनित्यं वेति। पुनः पुनरावर्त्तनेऽनवस्था। अथानित्यं तदा नित्यत्वस्य स्वरूपहान्या-ऽनित्यत्वमेव जयश्रीसुभगं भावुकं बभूव॥ २०१॥

नन्वन्या अपि सूत्रोक्ता जातयः सन्ति ताः किमिति नोक्ता इत्याह।

एतेनान्यत्वस्यात्मनोऽनन्यत्वादन्यत्वं नास्तीत्यादीन्यसदुत्तराणि प्रत्युक्तानीति॥

आत्मा पृथिव्यादिभ्योऽन्य इच्छाद्यधिकरणत्वाद्व्यतिरेके घट-वदित्युक्ते जातिवाद्याह। किमन्यत्वमात्मनोऽन्यत् उतानन्यत्। प्राचि पक्षे आत्मान्यत्वयोर्मध्ये अन्यदन्यत्वं वाच्यम्। येनात्मान्य-त्वयोरन्यत्वं भवति। तस्मिन्नप्यन्यत्वेऽन्यत्वान्तरं वाच्यम्। तथाच सत्यनवस्था इति प्राच्यं पक्षं बहिरेव भंक्त्वा द्वैतीयिकं भंक्तुमाहान्य-

त्वस्येत्यादि। अन्यत्वस्यात्मनः सकाशादन्यत्वादभिन्नत्वादन्यत्वं न भवतीत्यनन्यसमादीन्यसदुत्तराणि। एतेन कतिपयजातिस्वरूपनिरूपणेनोत्तराभिधानेन च प्रत्याख्यातानि ज्ञेयानि। तथा मूलसूत्रोक्तचतुर्विंशतिजातीनां मध्ये प्रसङ्गप्रतिष्ठान्तसंशयप्रकरणार्थापत्त्युपपत्त्यनित्यकार्य्यसमानामष्टजातीनां यदत्र लक्षणोत्तरे न व्याचख्याति तदासामास्वेवान्तर्भावादित्यूह्यम् ॥ २०२ ॥

अन्येषां जात्युत्तराणां निराकरणहेतुमाह।

निमित्तान्तरात् संज्ञान्तरे योज्यमानेऽर्थे तथाभावस्य निराकर्त्तुमशक्यत्वादिति ॥

निमित्तान्तराद्दृष्टान्तादिरूपात्। संज्ञान्तरे नित्यत्वादिरूपे। योज्यमाने परिणापाद्यमाने अर्थे। तथा भावस्य शब्दस्वाभाविकानित्यत्वादेः प्रतिक्षेप्तुमक्षमत्वादन्यान्यपि जात्युत्तराणि निराकृतानि। कोऽर्थः। यानि कानिचिज्जात्युत्तराणि तानि किञ्चित्साधर्म्यादिनिमित्तमाहृत्य नित्यत्वादौ यत्र तत्रोद्भाव्यन्ते। तानि च न सत्यानि न च तैर्वस्तुस्वभावं भंक्तुं प्रभूयते। ततो वस्तुस्वभावसामर्थ्यं प्रवलम्बशान्यान्यप्यसदुत्तराणि निराकर्त्तव्यानि ॥ २०३ ॥

ननु सर्वाणि जात्युत्तराणि कुतो नोक्तानीत्याह।

आनन्त्यान्न सर्वाणि जात्युत्तराण्युदाहर्त्तुं शक्यन्त इति ॥

वाचो युक्तीनामानन्त्याज्जातीनामानन्त्यं ज्ञेयम्। शेषं सुगमम् ॥ २०४ ॥

ननु यद्यनन्तानि जात्युत्तराणि कथं तर्हि सूत्रकृता चतुर्विंशतिसंख्यया नियमितानीत्याह।

सूत्राणामप्युदाहरणार्थत्वादिति ॥

सूत्रकृता चतुर्विंशतिर्जातय इति यदुक्तं तज्जात्युदाहरण-संख्यानार्थम्। न पुनर्जातिसंख्यार्थम्। कथमेतदवसीयत इति चेत्। स्थलान्तरेऽनन्यसमादीनां जातीनां लक्षणोदाहरणनिरीक्षणात् ॥ २०५ ॥

उपसंहरति।

उक्ता जातिभेदा इति ॥ २०६ ॥

अथ निग्रहस्थानान्याह।

अथेदानीं निग्रहस्थानान्युच्यन्ते। तान्यपि विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पादसंख्यानीत्यतः संक्षेपतो व्युत्पाद्यन्ते इति ॥

अथ जातिकथनानन्तरं निग्रहस्थानान्युच्यन्त इति संटङ्कः। तानि च निग्रहस्थानानि विप्रतिपत्तेर्विरुद्धज्ञानस्य विपरीतज्ञानस्य वा अप्रतिपत्तेरज्ञानस्य च वैचित्र्यादसंख्यातानि भवन्त्यतः समासात् कतिपयानि लक्षणोदाहरणाभ्यां प्ररूपयिष्यन्तेऽत्र ॥ २०७ ॥

तत्र प्राक् प्रतिज्ञाहानिं लक्षयति।

साध्य प्रतिदृष्टान्तधर्मानुज्ञा प्रतिज्ञाहानिरिति ॥

प्रतिज्ञासिद्धये वादिना साधनेऽभिहिते प्रतिवादिना च तत्र दूषणे प्रोक्ते तृतीये वचसि वर्त्तमानो वादी यदि स्वसाध्ये प्रतिपक्षदृष्टान्तधर्ममनुजानाति। तदाऽस्य प्रतिज्ञाहानिर्भवति ॥ २०८ ॥

एतमुदाहरति।

*यदि कृतकत्वात् घटवदनित्यः शब्द इष्यते तर्ह्याकाशवदमूर्त्तत्वान्नित्यः किं नेष्यते। एवं प्रतिवादिनोक्ते वाद्याह। भवतु किं नो बाध्यते तस्य नित्यत्वाभ्युपगमेनानित्यत्वप्रतिज्ञा हीयत इत्यतः प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवतीति॥

नित्यत्वस्वीकारात् तस्यानित्यत्वप्रतिज्ञा व्यपेयादिति भावः। तथा प्रतिज्ञाहानिरित्युपलक्षणम्। तेन हेतुविशेषणहान्यादयोऽपि निग्रहाय स्वधियाभ्यूह्याः॥ २०९॥

प्रतिज्ञान्तरं लक्षयति।

प्रतिज्ञातार्थप्रतिषेधे धर्म्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरमिति॥

प्रतिज्ञातार्थस्यानित्यः शब्द इत्यादेर्हेतुव्यभिचारादिना परेण प्रतिषेधे कृते तं दोषमनुद्धृत्य धर्म्मविकल्पाद्धर्म्मान्तरयोजनाद्यस्तदर्थनिर्देशः प्रतिषेधनिवृत्त्यर्थं प्रतिज्ञान्तरभणनं स प्रतिज्ञान्तरं निग्रहस्थानं भवति॥ २१०॥

लक्षणसूत्रं निदर्शनदर्शनद्वारा व्याचष्टे।

सर्व्वमनित्यं सत्त्वादित्यस्य दृष्टान्ताभावेन प्रतिज्ञातार्थस्य प्रतिषेधे धर्मो विवादास्पदीभूतलक्षणस्तस्य विकल्पः प्रतिज्ञातार्थविशेषणत्वेन योजनं तदर्थ इति प्रतिषेधनिवृत्त्यर्थो यथा मशकार्थो

---

* The reading adopted by the commentator here differs somewhat from the text ( See page 23, Line 8-10 ).

धूम इति निर्देशो यथा विवादास्पदीभूतं सर्व्वमनित्यमित्येतत्प्रतिज्ञान्तरं निग्रहस्थानं हेत्वन्तरवदिति ॥ *

प्राक् सर्व्वं पक्षीकृत्य दृष्टान्ताभावेन परेण प्रतिषेधे कृते सति तन्निवृत्त्यर्थं विमृश्य यत्पक्षान्तरोपादानं विवादास्पदीभूतं सर्व्वमनित्यमित्येतद्रूपं तत्प्रतिज्ञान्तरं नाम निग्रहस्थानं भवतीति भावः। यथैकहेतूपन्यासे तत्प्रतिषेधे चान्यहेतुमुपन्यस्यतो हेत्वन्तरं निग्रहस्थानं तद्वदिदमपि।

ननु प्रतिज्ञाहानेः प्रतिज्ञान्तरस्य च को विशेष इति चेत्। उच्यते। प्रतिज्ञाहानौ सर्व्वथा प्रतिज्ञात्यागः प्रतिज्ञान्तरे तु तस्या एव प्रतिज्ञाया विशेषणान्तरेण योजनमित्येकदेशपरावर्त्तान्नानयोरैक्यं युक्तमिति ॥ २११ ॥

प्रतिज्ञाविरोधमभिधत्ते।

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध इति ॥

यत्र प्रतिज्ञा हेतुना विरुध्यते हेतुर्वा प्रतिज्ञया स प्रतिज्ञाविरोधो भवति ॥ २१२ ॥

एनमुदाहरति।

यथा गुणव्यतिरिक्तं द्रव्यं भेदेनानुपलम्भादिति ॥

यदि द्रव्यं गुणव्यतिरिक्तं तदा भेदोपलम्भ एव भवेन्नत्वभेदोप-

---

* The commentator adopted the reading of the ms marked C. which has been mentioned in the Foot note of page 23 ( See page 23, Line 13 ).

लम्भः । अत्र तु द्रव्यं गुणव्यतिरिक्तं प्रतिज्ञाय भेदेनानुपलम्भं हेतूकुर्व्वतः प्रतिज्ञाहेत्वोर्विरोधात् प्रतिज्ञाविरोधो नाम निग्रह-स्थानं भवति ।

नन्वयं विरुद्धो हेत्वाभासो न पुनः प्रतिज्ञाविरोध इति चेत् न । विरुद्धहेत्वाभासे व्याप्तिस्मरणाद्विरोधोऽवधार्य्यते । अत्र तु प्रतिज्ञाहेतुवचनश्रवणमात्रादेवेति महान् भेदः ॥ २१३ ॥

प्रतिज्ञासंन्यासं लक्षयति ।

पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यास इति ॥

प्रमाणादिविरुद्धपक्षप्रतिषेधे प्रतिज्ञातार्थस्य योऽपह्नवः स प्रतिज्ञासंन्यासो भवति ॥ २१४ ॥

एतदुदाहरणमाह ।

*अनुष्णोऽयमग्निः कृतकत्वादित्यस्य प्रतिषेधे वाद्याह । संपश्यध्वमहो मध्यस्थाः साक्षिणो नाहमनुष्णमग्निं ब्रवीमीत्य-नुक्तोपालम्भोऽयमित्येतत्तस्य प्रतिज्ञासंन्यासलक्षणं निग्रहस्थान-मिति ॥

अग्निरनुष्ण इति वादिना पक्षे कक्षीकृते स्पर्शेन प्रत्यक्ष-बाधितत्वादयं कालात्ययापदिष्ट इति परेण प्रतिषिद्धे च यदा वादो आत्मप्रत्यायनार्थं संपश्यध्वमहो मध्यस्था इत्यादि वक्ति तदा तस्याग्निरनुष्ण इति स्वीकृतप्रतिज्ञापह्नवात् प्रतिज्ञासंन्यासो नाम

---

* The Text reads 'यथानुष्णोऽयमग्निरित्यस्य' (See page 24. Line 7).

निग्रहस्थानं भवति। तथा पक्षशब्दस्योपलक्षणत्वाद्धेत्वादिसंन्यासा अपि निग्रहहेतवः प्रतिपत्तव्या इति।

ननु प्रतिज्ञाहानेरस्य च को विशेष इति चेदुच्यते। प्रतिज्ञाहानौ परोक्षधर्म्मस्वीकारात्प्रतिज्ञात्यागोऽत्र तु परप्रतिषेधात् स्वयं स्वप्रतिज्ञात्यागः॥ २१५॥

हेत्वन्तरं निरूपयति।

अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरमिति॥

विशिष्यते येनासौ विशेषो विशेषणं तेन रहिते हेतौ प्रोक्ते परेण च तद्दूषणे समुद्भाविते तदनु सविशेषणं हेतुं ब्रुवतो हेत्वन्तरं भवति॥ २१६॥

एतन्निदर्शयति।

यथा नित्या वेदा अस्मर्य्यमाणकर्त्तृकत्वादित्यस्य जीर्णकूपारामादिभिरनैकान्तिकत्वेन प्रतिषेधे संप्रदायाविच्छेदे सतीति विशेषणमिच्छतो हेत्वन्तरमिति॥

मीमांसको नैयायिकं प्रति वेदानामपौरुषेयत्वं साधयति। यथा वेदा नित्या अस्मर्य्यमाणकर्त्तृकत्वादिति। अत्र जीर्णकूपारामादयश्चिरन्तत्वादस्मर्य्यमाणकर्त्तृका अपि न नित्या इति तैः हेतोः परेणानैकान्तिकत्वे उद्भाविते संप्रदायाविच्छेदे सतीति हेतोर्विशेषणं काङ्क्षतो हेत्वन्तरं नाम निग्रहस्थानं भवति।२१७॥

हेत्वन्तरं कथं निग्रहस्थानं भवतीत्याह।

पूर्व्वस्यासाधकस्योपादानादिति॥

पूर्व्वस्येति अस्मर्य्यमाणकर्त्तृकत्वस्य हेतोः असाधकत्वमनै-

कान्तिकत्वात् । यद्यपि प्रतिज्ञाहान्या हेतुहान्यादीनामुपलक्षण-वत्प्रतिज्ञान्तरेण हेत्वन्तरस्याप्युपलक्षणं भवत्यन्यथोदाहरणान्तरादीनामपि पृथगभिधानं प्रसज्येत । तथापि हेत्वन्तरस्य यत् पृथगभिधानं तत्परार्थानुमानवाक्यस्य साध्यसाधनभावेन भेदव्यवच्छेदार्थं तेनोपनयान्तरं निगमनान्तरञ्च प्रतिज्ञान्तरशब्देन उदाहरणान्तरं दूषणान्तरं च हेत्वन्तरेण संगृहीतं भवतीत्यर्थः ॥ २१८ ॥

अर्थान्तरमाह ।

प्रकृतादर्थादप्रतिसंबद्धार्थमर्थान्तरमिति ॥

यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां प्रकृतं हेतुं प्रमाणसामर्थ्येन समर्थयितुमसमर्थोऽहमित्यध्यवस्यन्नपि कथामपरित्यजन् वादी यत्नार्थान्तरं ब्रवीति तदर्थान्तरं भवति ॥ २१९ ॥

उदाहरति ।

*यथा नित्यः शब्दोऽस्पर्शवत्त्वादिति हेतुः । हेतुश्च हिनोतेर्धातोस्तुन् प्रत्यये सति कृदन्तं पदमित्यादि प्रसक्तानुप्रसक्त्या प्रकृतार्थानुपयोगिशास्त्रान्तरमुपदिशतोऽर्थान्तरं नाम निग्रहस्थानमितीति ॥

शब्दस्य नित्यत्वसिद्धेर अस्पर्शवत्त्वादिति हेतुं प्रागज्ञानात् प्रयुज्य पश्चादनैकान्तिकं मत्वा तद्दोषाच्छादनाय प्रकृतानुप-

* The Text reads "यथा शब्दो नित्यः प्रमेयत्वादिति हेतुः" ( See page 24. Line 17-18 ).

योगिनीं हेतुशब्दनिष्पत्तिमुपदिशतोऽर्थान्तरं नाम निग्रहस्थानं भवतीति भावः ॥ २२० ॥

निरर्थकं निग्रहस्थानमाह।

वर्णक्रमनिर्देशवन्निरर्थकमिति ॥

अभिधेयरहितकेवलवर्णानुपूर्वीमात्रं निरर्थकं निग्रहस्थानं भवति ॥ २२१ ॥

इदं निदर्शयति।

यथाऽनित्यःशब्दः कचटतपानां गजडदबत्वात् घझढधभव-दितीति ॥

अत्र कचटतपानां शब्दोऽनित्य एतावान् पक्षः। शेषं सुगमम् ॥ २२२ ॥

अविज्ञातार्थमाह।

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यप्रतीतमविज्ञातार्थ-मिति ॥

यत्साधनवाक्यं दूषणवाक्यं वा त्रिः कथितमप्यप्रसिद्धप्रयोगादि-निमित्तेन परिषदा प्रतिवादिना च न ज्ञायते। तदविज्ञातार्थं निग्रहस्थानं भवति ॥ २२३ ॥

एतदेव व्याचष्टे।

यद्वाक्यं * त्रिरभिहितमप्यप्रतीतप्रयोगातिद्रुतोच्चारितादिना

---

* The Text adds here "वादिना" ( See page 25. Line 6 ).

निमित्तेन पर्षत्प्रतिवादिभ्यां न ज्ञायते तदज्ञानसंवरणायोक्तम-विज्ञातार्थं नाम निग्रहस्थानमितीति ॥

अप्रतीतप्रयोगा अजढदचोक्रोडजर्यानिरटाटंकिष्ठा इत्यादय:। यद्वाऽयं त्रिनयनभ्रूसमाननामधेयवांस्तत्केतुमत्त्वाद्रसिनीवदित्यादय:। एतेन रूढैरेव प्रयोगै: कथा प्रवर्त्तनीयेति दर्शितम् ॥ २२४ ॥

अपार्थकमाचष्टे।

पौर्वापर्य्यायोगादप्रतिसंबद्धार्थमपार्थकमिति ॥

पूर्व्वं विशेषणमपरं विशेष्यं तयोर्भाव: पौर्वापर्य्यं विशेषणविशेष्यभाव: तस्यायोगोऽसंबन्धस्तस्मादसंबद्धार्थमनन्वितार्थं यद्वाक्यं तदपार्थकं नाम निग्रहस्थानं भवति ॥ २२५ ॥

उदाहरति।

यथा दशदाडिमानि षडपूपा कुण्डमजाजिनं पललपिण्डं इति ॥

अनन्वितं वाक्यपदाभ्यां द्वेधा। तत्र वाक्यानन्वितत्वे दशदाडिमानि षडपूपा इत्युदाहरणम्। अत्र दशदाडिमानां षडपूपानां न कश्चिदन्वय: संबन्धाभावात्। आकाङ्क्षासन्निधियोग्यतावशादेव हि वाक्यानां मिथोऽन्वयो भवेन्न चायं आकाङ्क्षादियोग्यमस्ति। पदान्वितत्वे कुण्डमजाजिनं पललपिण्डमित्युदाहरणम्। अत्रापि संबन्धाभावादनन्वितत्वम् ॥ २२६ ॥

अप्राप्तकालमाह।

अवयवविपर्य्यासवचनमप्राप्तकालमिति ॥

अवयवानां प्रतिज्ञादीनां विपर्य्यासेन यथाक्रमोल्लङ्घनेन प्रयुज्यमानमनुमानवाक्यमप्राप्तकालं नाम निग्रहस्थानं भवति ॥ २२७ ॥

एतदेवाह ।

प्रतिज्ञादीनामर्थवशात् क्रमस्तेषां विपर्य्ययेणाभिधानं *निग्रहस्थानमिति ॥

स्पष्टम् ।

इदं च निग्रहस्थानं नियमकथायामेव नत्वनियमकथायाम् ॥ २२८ ॥

न्यूनं व्यनक्ति ।

†हीनमप्यन्तिमेनाप्यवयवेन न्यूनमिति ॥

पञ्चावयवे वाक्ये प्रयोक्तव्येऽन्तिमेनापि निगमनादिनाप्यवयवेन हीनं प्रयुञ्जानस्य न्यूनं नाम निग्रहस्थानं भवति । अपिशब्दावुभयत्रापि स्वस्वार्थद्रढकौ द्रष्टव्यौ ॥ २२९ ॥

हीनस्य निग्रहस्थानत्वे हेतुमाह ।

साधनाभावे साध्यसिद्धेरयोगादिति ॥

अत्र साधनं पञ्चावयवं वाक्यं तेन विना साध्यसिद्धिर्न भवत्यतस्तदेकतमेनाप्यवयवेन हीनं सत् न्यूनं नाम निग्रहस्थानं भवत्येव ॥ २३० ॥

---

* The text adds here 'अप्राप्तकालं' ( See page 25. Line 13 ).

† The Text reads "अन्यतमेन" instead of "अन्तिमेन" ( See page 25, Line 15 ).

अधिकमभिधत्ते ।

हेतूदाहरणाधिकमधिकमिति ॥

एकेनैव हेतुना दृष्टान्तेन वा प्रतिपादितेऽर्थे हेत्वन्तरं दृष्टान्तान्तरं वा प्रयुञ्जानस्याधिकं नाम निग्रहस्थानं भवति। अत्र हेतूदाहरणग्रहणं सर्व्वाधिकोपलक्षणार्थम्। तेनोपनयनिगमनाधिक्यमपि निग्रहाय वेदितव्यम्। इदं तु निग्रहस्थानमेक एव हेतुर्दृष्टान्तो वा मयाऽभिधेय इति नियमकथायामेव नान्यत्र ॥२३१॥

अधिकस्य निग्रहस्थानत्वे हेतुमाह ।

*एकेन कृतकत्वादितरानर्थक्यादिति ॥

स्पष्टमेतत् ॥ २३२ ॥

पुनरुक्तं व्यनक्ति ।

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादादिति ॥

शब्दस्यार्थस्य चाभिहितस्य पुनरभिधानं पुनरुक्तं नाम निग्रहस्थानं भवत्यनुवादादन्यत्र ॥ २३३ ॥

एतदेव व्याचष्टे ।

सार्थकं पुनर्वचनमनुवादस्तद्व्यतिरेकेण पुनरभिधानं नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम्। नित्यो ध्वनिरविनाशी शब्द इत्यर्थपुनरुक्तमिति ॥

उक्तमपि वचो यत्र स्वार्थेन पुनरुच्यते सोऽनुवादस्तत्र पौनरुक्त्यं

---

* The Text reads "कृतार्थत्वात्" instead of "कृतकत्वात्" [ See page 25. Line 16 ].

न दोषाय। यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति। शेषं व्यक्तम्॥ २३४॥

पुनरुक्तान्तरमाह।

अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तमिति॥

प्रागुक्तशब्दसामर्थ्यरूपादर्थादापन्नस्यार्थस्य तदर्थप्रतिपादकेन शब्देन यत्पुनर्भणनं तदपि पुनरुक्तं निग्रहस्थानं भवतीत्यर्थः॥२३५॥

एतन्निदर्शयति।

यथा साधर्म्योदाहरणेऽभिहिते वैधर्म्योदाहरणाभिधानमिति॥

अयं भावः। दृष्टान्तो हि व्याप्तिनिश्चित्यै निदर्श्यते। सा चेदेकेनैव सिद्धा तदा द्वितीयो बलादपि पौनरुक्त्यकुक्षिनिक्षिप्तः स्यात्।

ननु हेतोरन्वयव्यतिरेकावगमार्थं उभयमभिधेयमिति चेन्न। अन्वयव्यतिरेकिणोऽन्यत्र साधर्म्यवैधर्म्योदाहरणयोरवश्यम्भावाभावात्। अन्वयव्यतिरेकिण्यपि परापेक्षां विना यदि द्वयमभिधीयते तदा पौनरुक्त्यमेवमपेक्षायां तु न कश्चिद्दोषः॥ २३६॥

आशङ्क्योत्तरयति।

कथं तत् निग्रहस्थानमिति कथावसानविरोधित्वादेकेन कृतकत्वादितरानर्थक्यादिति॥

कथावसानेति प्रसक्तानुप्रसक्त्या कथान्तं न यायादिति। शेषं स्पष्टम्। इदमपि निग्रहस्थानं नियतकथायां नान्यत्र विरोधा-

भावात्। यद्यप्यधिकात् पुनरुक्तं न भिद्यते तथापि शिष्यधी-वृद्धैर भङ्ग्या पुनरुक्तं पृथगुक्तम् ॥ २३७ ॥

अननुभाषणमाभाषते।

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणं प्रतिवादिनो निग्रहस्थानमिति ॥

परिषदादिविदितस्य वादिना त्रिरुच्चरितस्यापि वाक्यस्य यदप्रत्युच्चारणं तदननुभाषणं नाम प्रतिवादिनो निग्रहस्थानं भवति। प्रतिवादिन इति चोपलक्षणं तेन प्रतिवादिप्रतिपादित-दूषणस्यानुच्चारणे वादिनोऽपि निग्रहो ज्ञेयः ॥ २३८ ॥

अत्र युक्तिमाह।

अप्रत्युच्चारयन् किमाश्रयः परपक्षप्रतिषेधं ब्रूयादिति ॥ *

अप्रत्युच्चारयन् वाद्युक्तमननुवदन् किमाश्रयः किमाधारः सन् परपक्षनिषेधमभिदध्यात्। अयमर्थः। यदि प्रतिवादी परोक्तं नानुवदेत्तर्हि कथं स प्रतिपक्षं दूषयेत्। यतः सर्वोऽपि परोक्त-मनूद्यैव दूषयति। एतेन दूष्यमात्रस्याप्यनुवदनं प्रत्यसमर्थस्येदं दूषणमुक्तम्। न सर्वानुवादासमर्थं प्रति। तस्य व्यर्थत्वात् ॥ २३९ ॥

अज्ञानं प्रज्ञापयति।

अविज्ञातार्थं चाज्ञानम् ॥

परिषदावगतार्थमपि वाक्यं यत्र प्रतिवादी स्वयं प्रति-

---

* The Text reads कुर्यात् instead of ब्रूयात् (See page 26, Line 12).

वदन्नप्यर्थतः सम्यक् नावगच्छति तदज्ञानं नाम निग्रहस्थानं भवति ॥ २४० ॥

एतदेवाह ।

यच्च वाक्यं त्रिरभिहितमपि परिषदावगतार्थं प्रतिवादी प्रत्युच्चारयन्नार्थतः सम्यगधिगच्छति तदज्ञानं नाम * निग्रहस्थानमिति ॥

स्पष्टमेतत् ॥ २४१ ॥

अप्रतिभां विभावयति ।

कथामभ्युपगम्य तूष्णीभावोऽप्रतिभा वादिप्रतिवादिनोर्निग्रहस्थानमिति ॥

त्वया सह मया वीतरागकथा विजिगीषुकथा वा कर्त्तव्येत्यभ्युपगम्य वादी प्रतिवादी वा यदि तूष्णीमासीत तद्यप्रतिभा नाम तयोर्द्वयोरपि निग्रहस्थानं भवति ॥ २४२ ॥

विक्षेपमाह ।

कार्य्यव्यासङ्गात् कथाविच्छेदो विक्षेप इति ॥

वादमुपक्रम्य सिसाधयिषितस्यार्थस्य दौष्कर्य्यं पर्य्यालोच्य कालयापनार्थं यत्र कार्य्यं व्यासज्य कथा विच्छिद्यते स विक्षेपो नाम निग्रहस्थानं वादिप्रतिवादिनोर्भवति ॥ २४३ ॥

एतदेव वदति ।

---

* The Text adds here प्रतिवादिनो ( See page 26. Line 15 ).

कथामभ्युपगम्य सभ्येषु मिलितेषु ब्रवीत्यद्य मे महत्प्रयोजन-मस्ति। तस्मिन्नवसिते पश्चात्कथयिष्यामीति ॥

स्पष्टम्। तत्रायं वक्तव्यशेषः। यदि तत्प्रयोजनं सभ्या अभ्युपपद्येरंस्तदा कथां विच्छिन्दतोऽपि न निग्रहोऽन्यथा निग्रह एव ॥ २४४ ॥

मतानुज्ञां प्रज्ञापयति।

स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञेति ॥

यः परेणापादितं दोषमनुद्धृत्याभ्युपगम्य च ब्रवीति भवत्पक्षे-ऽप्ययं दोषः समान इति स परमतानुज्ञानान्मतानुज्ञा नाम निग्रहस्थानमापद्यते ॥ २४५ ॥

एतदेव व्याचष्टे।

यः स्वपक्षे मनागपि दोषं न परिहरति। केवलं परपक्षे दूषणं प्रसञ्जयति। भवांश्चौर इत्युक्ते त्वमपि चौर इति। तस्येदं निग्रहस्थानम्। स्वयं दोषाभ्युपगमात् परेणानभ्युपगमादिति ॥

परेण चौरो भवान् पुरुषत्वाविशेषात् प्रसिद्धचौरवदित्युक्ते स आह। भवानपि चौरः पुरुषत्वाविशेषादित्यप्रतिषिद्धमनुमत-मिति न्यायादहं चौरोऽस्मीति स्वयमनभ्युपगच्छन्नपि चौरो भवतीति भावः ॥ २४६ ॥

पर्य्यनुयोज्योपेक्षणमाख्याति।

निग्रहं प्राप्तस्यानिग्रहः पर्य्यनुयोज्योपेक्षणमिति ॥

पर्य्यनुयोज्योपेक्षणं नामेदं तव निग्रहस्थानमायातमतो निगृहीतोऽसीति निग्रहोपपत्त्या चोदनीयस्तं य उपेक्षते नानुयुंक्ते

स पर्य्यनुयोज्योपेक्षणात् पर्य्यनुयोज्योपेक्षणं नाम निग्रहस्थान-मास्तिघ्नुते ॥ २४७ ॥

इदमेवाह।

पर्य्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयस्तस्योपेक्षणं निग्रहप्राप्तौ सत्यामननुयोग इति ॥

स्पष्टम्।

एतच्च निग्रहस्थानं कस्यात्र निग्रह इति पृष्टैः सभ्यैरुद्भावनीयम्। न खलु निग्रहप्राप्तोऽपि स्वन्निगृहीतं कोऽपि ब्रूयात् ॥ २४८ ॥

निरनुयोज्यानुयोगं लक्षयति।

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोग इति ॥

अनिग्रहस्थानेऽनुद्भाव्यदोषे यो निग्रहस्थानानुयोगो दोषोद्भावनं स निरनुयोज्यस्यानिगृहीतव्यस्यानुयोगाद्दोषोद्भावनान्निरनुयोज्या-नुयोगो नाम निग्रहस्थानं भवति ॥ २४९ ॥

उदाहरणद्वारेणैतद्दर्शयति।

यथा सावयवत्वेन पृथिव्यादौ कार्य्यत्वसिद्धौ परो ब्रूयाद-प्रयोजकोऽयं हेत्वाभास इति तस्येदं मिथ्याभियोगलक्षणं निग्रह-स्थानमिति ॥ *

पृथिव्यादिकं कार्य्यं सावयवत्वात् घटवदिति हेतुना पृथिव्यादौ

---

* The word "मिथ्याभियोगलक्षणं" is omitted in the text ( See page 28. Line 2 ).

कार्य्यत्वसिद्धौ कृतायां परोऽभिधत्ते । बुद्ध्यादौ सावयवत्वाभावेऽपि कार्य्यत्वोपलम्भाद् व्याप्त्यभावेनाप्रयोजकोऽयं हेत्वाभास इति । तस्य मिथ्याभियोगलक्षणमनिग्रहे निग्रहाभियोगरूपं निग्रहस्थानं भवति । सपक्षैकदेशव्यापिनोऽपि धूमादेर्गमकत्वदर्शनात् ॥२५०॥

अपसिद्धान्तं लक्षयति ।

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्त इति ॥

स्वस्वदर्शनाभिप्रायेणाप्तप्रणीत आगमः सिद्धान्तः । यस्तं सिद्धान्तमभ्युपगत्य कथायां प्रवृत्तः सिसाधयिषितार्थसमर्थन-रभसेन दूषणोद्धरणरभसेन वा स्वसिद्धान्तविरुद्धमभिधत्ते । सोऽप-सिद्धान्तेन निगृह्यते ॥ २५१ ॥

सूत्रं विवरीषुराह ।

यथा मीमांसामभ्युपगम्य कश्चिदग्निहोत्रं स्वर्गसाधनमित्याह । कथं पुनरग्निहोत्रक्रिया ध्वस्ता सती स्वर्गसाधिका भवतीत्यनुयुक्तः प्राह । तया क्रिययाऽराधितः परमेश्वरः फलं ददाति राजादि-वत् । तस्येश्वरानभ्युपगमादपसिद्धान्तो निग्रहस्थानमिति ॥

मीमांसामते ईश्वरो देवता नास्ति । अग्निहोत्रं स्वर्गसाधन-मिति । ततो यदा मीमांसावादी क्रतुक्रियातुष्टः शम्भुः फलं ददातीति वक्ति तदा तस्य मीमांसानभिमतेश्वरस्वीकारादप-सिद्धान्तो निग्रहस्थानं भवति ॥ २५२ ॥

केषाञ्चिन्मते प्रतिज्ञार्थविपर्य्यासोऽपसिद्धान्त इत्यपसिद्धान्त-लक्षणं लक्षितमस्ति तन्मतं कुट्टयितुमाह ।

प्रतिज्ञातार्थविपर्य्ययस्तु प्रतिज्ञाहानिर्नापसिद्धान्त इति ॥

प्रतिज्ञातार्थस्य यो विपर्य्ययः स प्रतिज्ञाहानिरेव अपसिद्धान्तो न भवति। अयं भावः। स्वसाध्ये प्रतिदृष्टान्तधर्माभ्यनुज्ञा हि प्रतिज्ञाहानिः। अपसिद्धान्तस्तु सिद्धान्तमभ्युपगत्य स्वेच्छया कथाकरणं ततो न खल्वत्र प्रतिज्ञातार्थविपर्य्ययः। किन्तु स्वसिद्धान्तविरुद्धाभिधानम्। तस्मात् प्रतिज्ञाहानेरपसिद्धान्तः पृथगेव ॥ २५३ ॥

हेत्वाभासानां निग्रहस्थानत्वमाह।

हेत्वाभासाश्च यथोक्ता इति ॥

यथोक्ताः पूर्वोक्तलक्षणैर्लक्षिताः। असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाः षट् हेत्वाभासा निग्रहस्थानानि भवन्ति। चकारो दृष्टान्ताभासानन्वयविपरीतान्वयादिसमुच्चये। तेषामपि निग्रहस्थाननिमित्तत्वात् ॥ २५४ ॥

एतदेव स्वयमाह।

हेत्वाभासलक्षणेनैव यथोक्तेन हेत्वाभासा निग्रहस्थानानीत्यर्थः ॥

स्पष्टम् ॥ २५५ ॥

सूत्रे द्वाविंशतिर्निग्रहस्थानानीति यदुक्तं तन्न नियमार्थं किं तूपलक्षणार्थमित्याह।

एतेन दुर्वचनकपोलताडनवादित्रादीनां साधनानुपयोगित्वेन निग्रहस्थानत्वं वेदितव्यमिति ॥

एतेन कतिपयनिग्रहस्थानलक्षणोदाहरणनिरूपणेन आदिशब्दात् कुचेष्टादिग्रहः। शेषं स्पष्टम् ॥ २५६ ॥

नन्वन्यैरपशब्दादीनामपि निग्रहस्थानत्वमुक्तं तत् किं नोच्यत इत्याह।

नियमकथायां त्वपशब्दादीनामपि इति ॥

नियमकथा नाम संस्कृतैरेव शब्दैः श्लोकबन्धेन वा पञ्चवर्गत्यागेन वा वक्तव्यमित्येवंरूपा। तस्यामपशब्दानामादिशब्दाद्देशादीनां च निग्रहस्थानत्वं ज्ञेयम्। एतेनानियतकथायां पक्षत्यागादेव निग्रहो नान्यथा। इति शब्दो निग्रहस्थानपरिसमाप्त्यर्थः ॥ २५७ ॥

इति श्रीकृष्णर्षिगच्छमण्डनश्रीमन्महेन्द्रसूरिशिष्य-
श्रीजयसिंहसूरिविरचितायां न्यायतात्पर्य्य-
दीपिकाभिधानायां न्यायसार-
टीकायामनुमानपरिच्छेदो
द्वितीयः समाप्तः ॥

---

# आगमपरिच्छेदः ।

द्वैतीयिकपरिच्छेदे सभेदमनुमानं प्रपञ्च्य संप्रत्यागमलक्षणं सूचयति ।

अवसितमनुमानमागमस्येदानीं लक्षणमुच्यत इति ॥

अनुमानं नाम प्रमाणमवसितं समाप्तमिदानीमनुमान-समाप्त्यनन्तरमागमलक्षणं कथ्यते ।

ये काणादाद्याः शब्दोऽनुमानं व्याप्तिबलेनार्थप्रत्यायकत्वात् धूमानुमानवदित्यनुमानेनानुमाने शब्दमन्तर्भावयन्ति तन्मत-व्युदासायावसितमिति । कूटाकूटकार्षापणपरीक्षणप्रवणप्रत्यक्षेण प्रस्तुतहेतोर्व्यभिचारात् । तत्प्रत्यक्षस्यापीदृक्षस्वरूपः कार्षापणः सर्वोऽपि सत्यस्तदन्यस्त्वसत्य इति त्रैकाल्याकलितव्याप्त्या बद्धमूल-त्वात् । अन्यथा सत्यासत्यत्वप्रतीत्यनुपपत्तेः । तथा चात्र साव-काशं प्रत्यनुमानमेतत् । शब्दो नानुमानं विभिन्नकारणप्रभवत्वात् प्रत्यक्षवत् । ततो व्याप्तिमूलात् सामान्यार्थनिष्ठाच्चानुमानाद्व्याप्त्य-भावेऽपि परोक्षार्थप्रमापकत्वाद्व्यक्तिमात्रार्थगोचरत्वाच्च शाब्द-प्रमाणं पृथगेव । तदुक्तं

परोक्षप्रमितिं कुर्वद्व्याप्त्यादिविरहेऽप्यतः ।

पदं पृथक् प्रमाणं स्यात् व्यक्तिमात्रार्थगोचरम् ॥ १ ॥

आगमं लक्षयति।

समयबलेन सम्यक् परोक्षानुभवसाधनमागम इति॥

अत्रागम इति लक्ष्यं शेषं तु लक्षणम्। आगम्यन्ते मर्य्यादयावबुध्यन्ते पदार्था अनेनेत्यागमः। किमागम इत्याह। सम्यगित्यादि। सम्यगित्यादिपदानां समासो व्यवच्छेदश्च प्राग्वत्। केनेत्याह। समयबलेनेति। समयः पुरुषकृतः सङ्केतो न पुनरविनाभाववत् स्वाभाविकः। स्वाभाविकत्वे ह्यविनाभाविधूमादिलिङ्गवच्छब्दा अपि नियतमेवार्थं प्रत्याययेरन्न तु पुरुषसङ्केतवशादनियतम्। प्रत्याययन्ते च देशनैयत्येन सङ्केतिताः शब्दाः सर्वानप्यर्थांस्ततोऽविनाभावादन्य एव समयस्तस्य बलं ग्रहणस्मरणलक्षणं तेन। अत्र समयबलेनेति पदमागमस्यानुमानत्वव्युदासार्थमनुमानस्य व्याप्तिमूलत्वात्। न च वाच्यं व्याप्तिरेव समयो व्याप्तेरनुमेयाविनाभावितया समयस्य पुरुषेच्छाधीनतया च मिथः पार्थक्यात्। ततः समयजनितसाहाय्यात् संशयादिरहितपरोक्षानुभवस्य यत् साधनं शब्दरूपमशब्दरूपं चेष्टालिप्यक्षरादि वा तत्सर्वमागमप्रमाणं भवति॥ २॥

तस्य भेदमाह।

स द्विविधो दृष्टादृष्टार्थभेदादिति॥

अत्रार्थशब्देन प्रयोजनं ज्ञेयम्। तत्र दृष्टार्थो यथा नद्यास्तीरे सन्ति परिपाककषायाण्याम्राणीत्यादि। तत्र गतस्य दर्शनात्। अदृष्टार्थो यथा स्वर्गकामो यजेतेत्यादि। इह भवे ह्यामुष्मिकस्वर्गफलादर्शनादिति॥ ३॥

तादात्म्यतदुत्पत्त्यादिसम्बन्धासंबद्धतया अर्थानभिधायकत्वेन सर्वशब्दाप्रामाण्यवादिनं शाक्यमाशङ्क्य दृष्टार्थानां प्राक् प्रामाण्यमाह।

तत्र दृष्टार्थानां वाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात्प्रामाण्यं गम्यत इति॥

तत्रेति दृष्टार्थवाक्यनिर्द्धारणे। दृष्टार्थानि वाक्यानि पुत्रकामो यजेदित्यादीनि। प्रायेणेति कर्त्तव्यवैगुण्ये सतीति ज्ञापनार्थम्। तद्वैगुण्येन सतोऽपि फलस्य नाशात्। प्रवृत्तिरिष्टानिष्टादानहानरूपः शारीरो व्यापारः। सामर्थ्यं प्रेप्सितयथोक्तवस्त्वाप्तिः। अयमर्थः। पुत्रकामो यजेत् कारीरीं निर्वपेद्वृष्टिकाम इत्यादि। दृष्टार्थवाक्यानां पुत्रेष्टौ वर्षे वर्षेऽशौचनिर्वृत्तायां पुत्रदृष्टफलदर्शनात् प्रामाण्यमवगम्यते। यद्येतानि वाक्यानि सत्यानि न घटेरंस्तदा पुष्कलद्रव्यव्ययसाध्ये क्लेशावहे तदुक्ते कर्मणि न प्रवीणाः प्रवर्त्तेरन्न च प्रेप्सितफलान्नास्तिघ्नुवीरंस्ततो यथा प्रत्यक्षादिकं स्वप्रत्यायितमर्थं प्रापयत्प्रमाणत्वेन स्वीचक्रे तथा शब्दोऽपि स्वोक्तमर्थं प्रापयन् प्रमाणत्वेन स्वीकार्य्यः। स्वार्थप्रापकत्वेन द्वयोस्तुल्यत्वात्। अन्यथा शब्दानामर्थसम्बन्धाभावात् व्यर्थवाक्त्वेन तूष्णीकत्वापातात्। अथेत्थमाचक्षीथाः प्रत्यक्षादि प्रमाणमर्थसम्बद्धत्वात्। शब्दो न तदभावात्। तन्न। शब्दोऽपि प्रमाणमर्थसम्बद्धत्वादेव। ननु शब्दस्यार्थेन सह कः सम्बन्ध इति चेत् प्रत्यक्षस्यापि स क इति वाच्यम्। ग्राह्यग्राहकभाव इति चेत्। अत्रापि वाच्यवाचकभावो भविष्यति। ततः शब्दः प्रमाणत्वेन स्वीकार्य्य एव।

तथाच प्रयोगः। शब्दः प्रमाणं स्ववाच्यार्थप्रापणसमर्थत्वात्। प्रत्यक्षवत्। तथा पुत्रकामो यजेदित्यादि दृष्टार्थवाक्यानि प्रमाणानि। कर्त्राद्यवैगुण्ये सति समर्थप्रवृत्तिजनकत्वात् प्रत्यक्षवदिति ॥ ४ ॥

अदृष्टार्थानां प्रामाण्यमाचष्टे।

अदृष्टार्थानां पुनराप्तोक्तत्वेनेति ॥

अदृष्टार्थानि स्वर्गकामो यजेतेत्यादीनि। पुनः शब्दो दृष्टार्थप्रामाण्यव्यतिरेके। आप्तोक्तत्वेनेति यो यत्रावञ्चकः स तत्राप्तः। यद्वा आप्ती रागद्वेषक्षयः सा यस्यास्ति। अर्श्चादित्वात् अप्रत्यये स आप्तस्तदुक्तत्वेन प्रामाण्यं गम्यत इति शेषः। अयं भावः। अदृष्टार्थवाक्यानां साक्षादर्थदर्शनाभावादाप्तोक्तत्वेन प्रामाण्यं गम्यते। नान्यथा। न चाप्तोऽनृतं वक्ति। तद्धेतुरागादिदोषाभावादाप्तत्वहानेश्च। तदुक्तम्।

आगमो ह्याप्तवचनमाप्तिं दोषक्षयं विदुः।

क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात् ॥ ५ ॥

परं शङ्कते।

कथमिति ॥

अत्र कथमिति परप्रश्नः स चैवं प्रश्नयति। ननु यागादौ निष्ठितेऽपि तत्कालेन स्वर्गादिफलानुपलम्भे आप्तोक्तस्य सुतरां दुरवधारणत्वाददृष्टार्थवाक्यानां कथं प्रामाण्यं ज्ञेयमिति ॥ ६ ॥

परिहरति।

पुत्रकामो यजेतेत्यादि वाक्यानां प्रवृत्तिसामर्थ्यात् प्रामाण्य-

मनुमाय तत्प्रणेतुरतीन्द्रियार्थदर्शित्वेन परमाप्तत्वमवधार्य्य तत्प्रणीतानां *सर्व्ववाक्यानामप्रामाण्ये कारणाभावात् प्रामाण्यमनुमीयत इति॥

अदृष्टार्थवाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात् प्रामाण्यं दुर्ज्ञानमिति पुत्रकामो यजेदित्यादिवाक्यानां प्रवृत्तिसामर्थ्यात् प्राक् प्रामाण्यमनुमेयम्। यथा विवादास्पदानि दृष्टार्थवाक्यानि प्रमाणानि। कर्त्राद्यवैगुण्ये सति प्रेक्षावत्प्रवर्त्तकत्वात् प्रत्यक्षवत्। इष्टिपूर्त्तावपि कादाचित्कफलवैफल्येन प्रकृतिहेतोर्व्यभिचारनिवृत्त्यर्थं कर्त्राद्यवैगुण्ये सतीति पदम्। वैगुण्याभावे शान्तिकपौष्टिकादिकर्म्मस्वनेकशः फलोपलम्भात्। ततस्तत्प्रणेतुर्दृष्टार्थवाक्यप्रणेतुरतीन्द्रिया अक्षातिक्रान्ता ये इष्टिनिष्पत्त्यनन्तरभविष्णुपुत्रजन्मशान्तिकपौष्टिकादयोऽर्थास्तद्दर्शित्वेन हेतुना परमाप्तत्वमतिसाक्षाद्यवञ्चकत्वं सर्वज्ञत्वं वा ज्ञेयम्। तथाहि पुत्रकामो यजेदित्यादि वाक्यप्रणेता परमाप्तोऽतीन्द्रियार्थदर्शित्वाद्व्यतिरेकेऽस्मदादिवत्। ततस्तत्प्रणीतानामाप्तप्रणीतानां सर्ववाक्यानां दृष्टादृष्टार्थानामेककर्त्तृकत्वेन प्रामाण्यमनुमानविषयीक्रियते। यथा दृष्टादृष्टार्थानि सर्व्ववाक्यानि प्रमाणान्याप्तोक्तत्वात् पित्रादिवाक्यवत्। न चाप्तोक्तत्वमसिद्धम्। विवादास्पदानि वाक्यान्याप्तप्रणीतानि समर्थप्रवृत्तिजनकत्वे सति वाक्यत्वात् पित्रादिवाक्यवत्। प्रामाण्ये हेतुः अप्रामाण्येत्यादि। बौद्धादिराद्धान्ताना-

---

* The word सर्व्व is omitted in the text (See page 29. Line 8).

मेकदेशसंवादेऽपि नैरात्म्यक्षणिकत्वादिकमप्रामाण्ये कारणमस्त्यत्र तु प्रमाणोपपन्नसमस्तवस्तुदेशकत्वेनाप्रामाण्ये न किञ्चित्कारणमस्तीति सर्वाणि वेदवाक्यानि प्रमाणत्वेन स्वीकार्य्याणि। तथाच प्रयोगः। वेदवाक्यानि प्रमाणत्वेन स्वीकार्य्याणि अप्रामाण्यकारणरहितत्वात् पुत्रं प्रत्युक्तपित्रादिवाक्यवद्व्यतिरेके वञ्चकवाक्यवद्वा। तदेवं क्वचित्प्रवृत्तिसामर्थ्यात् क्वचिदाप्तोक्तत्वात् कारणं तत्प्रामाण्यं वदता प्रकरणकारेण स्वमते परतः प्रामाण्यं समर्थितं स्वतो निरासि॥ ७॥

ननु पुरुषाणां रागादिदोषकलुषितान्तःकरणत्वेन पौरुषेयत्वाद्वेदवाक्यानां प्रामाण्यं न युक्तं किन्तु नित्यत्वात् युक्तमिति जल्पकं परं निराकरोति।

न नित्यत्वेन वाक्यानां हि नित्यत्वे प्रमाणाभावादिति॥

न हि वेदः प्रमाणं नित्यत्वादिति वक्तुं शक्यम्। वाक्यानां नित्यत्वे प्रमाणाभावात्। प्रमाणं विना च साध्यसिद्धेरयोगात्। तथाहि तन्नित्यत्वं प्रत्यक्षेण प्रतीयते अनुमानेन वा। न तावत्प्रत्यक्षेण। तस्य विद्यमानेन्द्रियकवस्तुवृत्तित्वेनानादिकालाकलितवस्त्वनवगमात्। न च योगिप्रत्यक्षेणेति वाच्यं तदनभ्युपगमादन्यथा वेदवादिनां निर्विवादं सर्वविद्वादाभ्युपगमः स्यात्। नाप्यनुमानेन तदविनाभाविलिङ्गाभावात्। कर्त्रस्मरणादिलिङ्गस्यानैकान्तिकत्वात्।

अथ नित्या वेदाः संप्रदायाविच्छेदे सत्यस्मर्य्यमाणकर्त्तृकत्वादाकाशवदित्यनुमानं नित्यत्वेऽस्तीति चेन्न। विशेषणस्य

सन्दिग्धासिद्धत्वेनास्य हेत्वाभासत्वात्। तथाहि यद्यादिमतामपि प्रासादादीनां संप्रदायो व्यवच्छिद्यते तदानादीनां वेदानामव्यवच्छेदो संप्रदायोऽद्यापि विद्यत इत्यस्य दुःश्रद्धानत्वाद्विशेषणं सन्दिग्धासिद्धम्। विशेष्यमप्येकतरासिद्धं प्रतिवादिनो वेदकर्त्तुः स्मरणात्। यथा ततो यो हि वै वेदांश्च प्रहिणोति इति। प्रजापतिः सोमं राजानमन्वसृजत्ततस्त्रयो वेदा अन्वसृजतेति। संप्रदायाविच्छेदश्च वृद्धपारम्पर्य्येण यथावत्पाठस्तादृशश्चाकाशे नास्तीति साधनवैकल्यं दृष्टान्तस्य।

किञ्च वेदकर्त्तृस्मरणं प्रत्यक्षेणानुमानेन वा। यदि प्रत्यक्षेण तर्हि कुमारसम्भवादीनामपि कर्त्तुः प्रत्यक्षास्मरणान्नित्यत्वापत्तिः। नाप्यनुमानेन तस्य वेदकर्त्रनुभवसाधकत्वात्। तद्यथा यद्येनासम्भवद्विशेषं तत्तेन समानहेतुकं यथा सम्भवद्विशेषो घटो घटान्तरेण। असम्भवद्विशेषाणि नित्यवाक्यान्यनित्यवाक्यैरिति। न चायं हेतुरसिद्धस्तद्विशेषस्य क्वापि केनाप्यप्रतीतत्वात्। दुर्भणत्वादिस्तद्विशेषोऽस्तीति चेन्न। तस्य दुर्वाक्येष्वपि भावात्। शान्तिकहिंसादिकर्म्माविसंवादः सोऽस्तीति चेत् न। तस्यापि क्वापि व्यभिचारेणानैकान्तिकत्वात्।

अन्यच्च अपौरुषेयत्वेन नित्यत्वं साध्यते। स चासौ अपौरुषेयः किं सम्बन्ध उत वर्णा उत वाक्यम्। तत्र तादात्म्यतदुत्पत्तिसंयोगसमवायसंबन्धाः शब्दार्थयोरसम्भवादेव निरस्ताः। वाच्यवाचकभावस्तु चेत् साङ्केतिकस्तदा सङ्केतस्य पुरुषजन्यत्वादपौरुषेयत्वं कथं स्यात्। अथ नित्यः सोऽपि संबन्धिनोः शब्दार्थयोर्नित्यत्वेऽनित्यत्वे वा

स्यान्नित्यत्वे सर्वदा सर्वत्र सर्वशब्दार्थप्रतीतिः स्यादपेक्षणीयाभावात्। अनित्यत्वे तु संबन्धस्याप्यनित्यत्वं आधारनाशे सत्याधेयनाशात्। नापि वर्णात्मके वेदे च भेदाप्रतिभासात् य एव वेदे ककारः स एव लोके प्रतिभातीति भेदाप्रतिभासे प्रत्यभिज्ञाया एवालंकर्मीणत्वात्। नापि वाक्यं तस्य वर्णव्यूहात्मकत्वात् वर्णानां चोक्तयुक्तेरपौरुषेयत्वाघटनात्। किञ्च।

ताल्वादिजन्मा ननु वर्णवर्गो वर्णात्मको वेद इति स्फुटञ्च।
पुंसश्च ताल्वादिरतः कथं स्यादपौरुषेयोऽयमिति प्रतीतिः॥

यच्च

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनवाच्यत्वादधुनाध्ययनं यथा॥
अतीतानागतौ कालौ वेदकारविवर्जितौ।
कालत्वात्तद्यथा कालो वर्त्तमानः समीच्यते॥

इत्याद्यं नित्यत्वसाधनम्। तद्यस्मिंस्तस्मिंश्च वाक्ये प्रयोक्तुं शक्यमित्युपेक्षणीयमेव॥ ८॥

ननु यदि नित्यत्वे प्रमाणं नास्ति तर्ह्यनित्यत्वे किं प्रमाणमिति परं शङ्कित्वाह।

अनित्यत्वे पुनर्वाक्यत्वाद्यनेकमनुमानमिति॥

अनेकमनुमानमित्यत्र जात्यैकवचनं वाक्यत्वाद्यनुमानानि यथा वेदवाक्यान्यनित्यानि वाक्यत्वाल्लौकिकवाक्यवत्। पौरुषेयाणि वेदवाक्यानि विचित्ररचनात्वात् कालिदासादिवाक्यवत्।

वेदसंप्रदायो व्यवच्छिद्यते संप्रदायत्वाद्व्याकरणादिसंप्रदायवदि-त्यादीनि ॥ ९ ॥

प्रसङ्गान्तरमाह।

सर्वदोपलब्ध्यनुपलब्धिप्रसङ्गश्च विपर्य्यये नियामकाभावा-दिति ॥

यदि वेदवाक्यानां नित्यत्वं भवेत्तर्हि नित्यत्वाद्व्यापकत्वे सति सर्वदोपलम्भोऽनुपलम्भो वा प्रसज्येतान्यानपेक्षणात्। अयं भावः। किं शब्दानामिन्द्रियग्रहणयोग्यतास्ति न वा। आद्ये कल्पे सर्वशब्दानां नित्यत्वाद्व्यापकत्वेन सार्वदिके इन्द्रियसम्बन्धे सति सर्वदा सर्वशब्दोपलब्धिः केन वार्येत। द्वितीयस्मिन् कल्पे त्वनुप-लब्धिः सार्वदिक्यापद्येत ग्रहणायोग्यत्वात्। ततोऽपेक्षणीया-भावाद्युक्त एव सर्वशब्दानां सर्वदोपलब्ध्यनुपलब्धी। तदुक्तम्।

नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥

विपर्य्यये कदाचिदुपलब्ध्यावनुपलब्धी नियामकस्य व्यवस्थापक-स्याभावात् कदाचिदुपलभ्यते कदाचिन्नेत्यत्र नियामकं किञ्चि-न्नास्तीत्यर्थः॥ १० ॥

परमाशङ्कते।

अभिव्यञ्जकाभावात् तदनुपलब्धिरिति चेदिति ॥

अभिव्यञ्जकः शब्दप्रकाशको वायुस्तदभावाच्छब्दानुपलब्धिर्न त्वनित्यभावात्ततेति शेषः॥ ११ ॥

परिहरति।

न तदनिर्देशादिति॥

तस्य शब्दाभिव्यञ्जकवायोरनिर्देशो वैशिष्ट्येनाकथनं तस्मा-दभिव्यञ्जकाभावात् कृता तदनुपलब्धिर्भवतीत्यर्थः॥ १२॥

पुनः परं शङ्कते।

वायुसंयोगविभागाविति चेदिति॥

वक्तुः कोष्ठस्य वायोस्ताल्वोष्ठपुटादिसम्पर्कः संयोगः। तद्विश्लेषो विभागस्तौ शब्दोपलब्ध्यनुपलब्धौ प्रति हेतूभवतः। कोऽर्थः। यदा वक्तुः कोष्ठगो वायुस्ताल्वोष्ठपुटादिष्वभिहन्यते तदा शब्दा अभिव्यज्यन्ते तदभावे नाभिव्यज्यन्त इति॥ १३॥

पुनः प्रसङ्गापादनेन परिहरति।

न। सर्वशब्दानां युगपद्ग्रहणप्रसङ्गादिति॥

यदि वायुसंयोग एवाभिव्यञ्जकस्तदा युगपत्सर्वशब्दोपलब्धिः प्रसज्येत। व्यञ्जकस्य सर्वशब्दान् प्रति तुल्यत्वात्। यथाऽभिव्यञ्जक-प्रदीपसद्भावे चक्षुरिन्द्रियग्राह्याणां घटादीनां युगपदुपलम्भस्तथा शब्दाभिव्यञ्जकवायुसद्भावे श्रोत्रग्राह्याणां सर्वशब्दानां युगपदुप-लम्भः स्यादित्यर्थः॥ १४॥

परः प्रश्नयति।

कथमिति॥

अयमभिसन्धिः परप्रश्नस्य। न हि मया सर्वशब्दानामेक एवाभिव्यञ्जकोऽभ्युपगम्यते। किं तु यावन्तो शब्दास्तावन्तोऽभि-

व्यञ्जका इत्यस्माकं सिद्धान्तस्ततो यस्यैव शब्दस्याभिव्यञ्जकस्तस्यैवाभिव्यक्तिर्न सर्वशब्दानां तेन नातिप्रसङ्ग इति ॥ १५ ॥

पूर्वोक्तयुक्त्या पराभिप्रेतं व्यञ्जकनानात्वं विषयिणि निर्लोठयति।

श्रोत्रं तावत्समानेन्द्रियग्राह्यसमानदेशसमानधर्मापन्नानामर्थानां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्य्यं न भवतीन्द्रियत्वाच्चक्षुर्वदिति ॥

अभिव्यञ्जकनानात्वखण्डनायेदमनुमानम्। तत्र श्रोत्रं तावदित्यादिः संस्कार्य्यं न भवतीति पर्य्यन्तः पक्षः। इन्द्रियत्वादिति हेतुः। चक्षुर्वदिति दृष्टान्तः। प्रतिनियतेत्यादि। प्रतिनियता एकैकव्यङ्ग्यं प्रति निश्चिताः संस्कारका वायवस्तैः। संस्कार्य्यं शब्दग्रहणायाऽभिमुखीकार्य्यमिति। समानेन्द्रियग्राह्यादिविशेषणत्रयमर्थानाम्। तेषां च व्यवच्छेद्यमेवम्। श्रोत्रमर्थानां ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्य्यं न भवतीन्द्रियत्वादित्युक्ते चक्षुरादि तत्तत्सहकारिसहकृतरूपरसादिग्रहणप्रवर्त्तिष्णुचित्तेन व्यभिचारस्तन्निवृत्त्यर्थं समानेन्द्रियग्राह्येति पदम्। भिन्नदेशस्यास्तु रूपादिग्रहणाय प्रतिनियतदीपादिसंस्कारकसंस्कृतेन चक्षुषानैकान्तापनोदाय समानदेशेति पदम्। इदञ्च युगपदिन्द्रियसंबन्धसिद्ध्यर्थं द्रवीभूतमिश्रितघृततैलयोः स्वरूपज्ञानाय। प्रतिनियतसंस्कारकसंस्कृतेन चक्षुषातिव्याप्तिविच्छित्तये समानधर्मेतिपदम्। अयं भावः। ये समानेन्द्रियग्राह्याः समानदेशाः समानधर्मापन्नाश्च शब्दास्तेषां ग्रहणाय प्रतिशब्दमेकैकसंस्कारकसंस्कार्य्यं श्रोत्रं न भवति किंत्वेकसंस्कारकसंस्कृतमेव तान् तथाविधान् शब्दान् युगपद्गृह्णाति।

यथा चक्षुरेकप्रदीपसंस्कृतं समानेन्द्रियग्राह्यसमानदेशसमानधर्मापन्नान् घटादीन् युगपद्गृह्णाति तथानेनानुमानेन परप्रयुक्तं व्यञ्जकनानात्वं खण्डयित्वा युगपत्सर्वशब्दग्रहणं समर्थितम् ॥ १६ ॥

यावन्तः शब्दास्तावन्तोऽभिव्यञ्जका इति पराभिप्रेतश्रोत्रविषयभूतशब्दव्यञ्जकनानात्वं निराचष्टे ।

शब्दा वा प्रतिनियतसंस्कारकसंस्कार्य्या न भवन्ति । समानेन्द्रियग्राह्यसमानदेश*समानधर्मापन्नत्वे सति युगपदिन्द्रियसंबद्धत्वाद्घटादिवदिति ॥

अत्रानुमाने शब्दाः प्रतिनियतसंस्कारकसंस्कार्य्या न भवन्तीति पक्षः । समानेन्द्रियेत्यादि संबद्धत्वादिति पर्य्यन्तो हेतुः । घटादिवदिति दृष्टान्तः । प्रतिनियतेत्यादि । प्रतिनियता एकैकं शब्दं प्रति निश्चिताः । संस्कारका इत्यभिव्यञ्जकाः । समानेन्द्रियादिपदानां व्यवच्छेद्यन्त्वेवम् । युगपदिन्द्रियसंबद्धत्वादित्युक्ते हेतौ एकद्रव्यसमवेतत्वाद् युगपच्चक्षुरादिसंबद्धत्वेऽपि प्रदीपादिप्रतिनियतसंस्कारकसंस्कार्य्यैं रूपादिभिर्व्यभिचारः स्यात्तन्निवृत्त्यर्थं समानेन्द्रियग्राह्येति पदम् । समानेन्द्रियग्राह्या अपि भिन्नदेशस्थाः प्रतिनियतसंस्कारकसंस्कार्य्या भवन्तीति तत्परिहाराय समानदेशेति पदम् । समानेन्द्रियग्राह्ये समानदेशस्थेऽपि द्रवीभूतमिश्रितघृततैले प्रतिनियतसंस्कारकसंस्कार्य्ये एवेति तद्व्यवच्छेदाय समानधर्मेति पदम् । कोऽर्थः । यथा समानेन्द्रियग्राह्य-

* The word "समानदेश" is omitted in the text ( See page 30. Line 5 ).

समानदेशसमानधर्मापन्ना घटादयश्चक्षुः प्रति प्रतिनियतसंस्कारक-संस्कार्य्या न भवन्ति किन्त्वेकप्रदीपसंस्कृताः तद्गोचरीभवन्ति। तथा समानेन्द्रियग्राह्यसमानदेशसमानधर्मापन्नाः शब्दा अपि श्रोत्रं प्रति प्रतिनियतसंस्कारकसंस्कार्य्या न भवन्ति किन्त्वेकाभि-व्यञ्जकवाय्वभिव्यक्तास्तेन ते सर्वे ग्राहिष्यन्त इति। तदेवमनु-मानद्वयेन विषयिविषययोर्व्यञ्जकनानात्वनिरासे पूर्व्वत्वाच्च च समानधर्मेति पदं केचिन्न मन्यन्ते। सर्वथा साधर्म्याभावात्। कथञ्चित्साधर्म्ये तु युज्यते ॥ १७ ॥

परमतमाशङ्कते।

उत्पत्तिपक्षेऽप्ययं समानो दोष इति चेदिति ॥

अभिव्यक्तिपक्षे एकव्यञ्जकसद्भावे युगपत्सर्वशब्दग्रहणमिति यो दोषः प्रोक्तः स भवदभिमते उत्पत्तिपक्षेऽपि समानः। एक-शब्दोत्पादकवायुसम्पर्के युगपत्सर्वशब्दोत्पादेन सर्वशब्दग्रहण-प्रसङ्गात्। अथान्योत्पादनेऽलंकर्मीणोऽपि यदर्थं प्रेरितो वायु-स्तमेव करोति नान्यमिति वक्षि तर्ह्येतदभिव्यक्तिपक्षेऽपि समानम्। तदुक्तम्।

अन्यार्थं प्रेरितो वायुर्यथाऽन्यं न करोति सः।
तथाऽन्यवर्णसंस्कारशक्तोऽन्यं न करिष्यति ॥ १८ ॥

एतत्परिहरति।

न। मृत्पिण्डप्रदीपदृष्टान्ताभ्यां *कारकव्यञ्जकवैधर्म्यसिद्धे-रित्यलमतिप्रसङ्गेनेति॥

मृत्पिण्डेन प्रदीपेन च कारकव्यञ्जकयोर्महद्वैधर्म्यम्। तेनो-त्पत्तिपक्षे त्वदुक्तो दोषो न भवतीति शेषः। अयं भावः। कारकं हि नियतं व्यञ्जकं त्वनियतम्। तथा ह्येको घटोत्पादको मृत्पिण्डो घटमेव घटयति न पटादि। व्यञ्जकस्त्वेकः प्रदीपः पटार्थं प्रकाशितोऽपि घटादीनपि प्रकाशयति। ततः कारकव्यञ्जकयो-र्मृत्पिण्डप्रदीपदृष्टान्ताभ्यां वैधर्म्यसिद्धेर्नैयत्यानैयत्यनिष्पत्तेरुत्पत्ति-पक्षे युगपत्सर्वशब्दग्रहणप्रसङ्गो न भवतीति॥ १९॥

अथ प्रागुद्दिष्टप्रमाणत्रित्वसंख्यासमर्थनपूर्वं पूर्वोक्तेषु त्रिषु प्रमाणेषु उपमानादिप्रमाणान्यन्तर्भावयति।

एवमेतानि त्रीण्येव प्रमाणान्येष्वेवोपमानार्थापत्तिसम्भवा भावेतिह्यादीनामन्तर्भाव इति॥

त्रीण्येवेत्यत्रैवकारः प्रमाणचतुष्टनिरासार्थः। ननूपमानादीनि किं प्रमाणान्यप्रमाणानि वा। आद्ये कल्पे तान्यपि लक्षयि-तव्यानि स्युस्तल्लक्षणोक्तौ च प्रागुक्तप्रमाणत्रित्वसंख्या विशीर्य्येत। द्वितीये कथं परेषां तानि प्रमाणत्वेन प्रसिद्धानीत्याशङ्क्याह। एष्वेवेत्यादि। अत्राप्येवकारस्त्रित्वान्तर्भावावधारणार्थः। उप-मानादीनां लक्षणं यथास्थानं वक्ष्यते। आदिशब्दाच्चेष्टालिप्या-दीनां परिग्रहः॥ २०॥

---

* The text reads "संस्कारव्यञ्जक" instead of "कारकव्यञ्जक" [ See page 30. Line 7 ].

शब्दे उपमानमन्तर्भावयति।

*यथा गौरेवं गवय इत्युपमानं शब्देऽन्तर्भूतमिति ॥

अस्यैवमर्थघटना। अप्रेक्षितगवयेन केनापि नागरिकेण कीदृक् गवय इति पृष्टो वनेचरो यथा गौरेवं गवय इत्याचष्टे। ततः प्रष्टुर्निष्टङ्कितासभावस्य वनेचरस्य वचनात्परोक्षेऽपि गवयपिण्डे यादृग्गौस्तादृग्गवय इत्युपमितिप्रमितिरुदेति वनविहारे गवयप्रेक्षणात्साक्षाद्भवति च। आप्तवनेचरवचनादुपमानविषयभूते गवयपिण्डे संज्ञासंज्ञिसंबन्धप्रतिपत्तेः सम्पन्नत्वादागमस्याप्तवचनरूपत्वादागमान्तरुपमानमन्तर्बभूव। तथाच प्रयोगः। यादृग्गौस्तादृग्गवय इत्युपमानं शाब्दमाप्तवचनत्वात् स्वर्गकामो यजेदित्यादिवाक्यवत्। न चैतद्वाच्यं यादृग्गौस्तादृग्गवय इति वाक्यं गोसादृश्येन गवयं ज्ञापयत् पृथक्प्रमाणमिति। पृथुबुध्नोदराकारं वृत्तं कुम्भं विभावयेरित्यादिवाक्यानामपि पृथक् प्रमाणत्वापत्तेः। तथाच प्रमाणेयत्तापि विशीर्य्येतेत्यलम् ॥ २१ ॥

मीमांसकोक्तमुपमानमपमानयति।

अनेन सदृशी† गौरित्युपमानमिति चेदिति ॥

अरण्यानीं विहरमाणस्य पुंसो गोसवर्णपिण्डनिवर्णनात्मिका गौरनेन सदृशीति यत् ज्ञानमुन्मीलति तद्गोपिण्डवदिष्ट-

* The reading adopted by the commentator here, differs somewhat from the text ( See page 30, Line 11 ).

† The text adds here "मदीया" ( See page 30. Line 12 ).

त्वादिहेतुना प्रत्यक्षादिष्वनन्तर्भवदुपमानमिति पृथक्प्रामाण्यमास्तिघ्नुते। ततः कथमस्य शब्देऽन्तर्भाव इति भावः। अत्र प्रयोगः। गवयसादृश्यविषयं गोविज्ञानं पृथक्प्रमाणं प्रत्यक्षाद्यविषयत्वादर्थापत्त्यादिसाध्यार्थवत्। व्यतिरेकि घटज्ञानवच्चेति ॥२२॥

परिहरति।

न। तस्य स्मृतित्वादिति ॥

अनेन सदृशी मदीया गौरिति परेण यदुपमानमूचे तदुपमानं न भवति। किन्तु स्मरणं गवयदर्शनादनेन गवयेन सदृशी मामिका गेहानुभूता गौरिति ज्ञानस्य स्मृतिरूपत्वात् ॥ २३ ॥

स्मरणमेव समर्थयते।

पूर्वमेव हि सादृश्यविशिष्ट उपलब्धो गोपिण्डः। कस्मादुपलब्धियोग्यत्वादयोग्यत्वे वा न कदाचिदुपलभ्येतादृष्टवदिति ॥

भूयोऽवयवसामान्ययोगः सादृश्यम्। तच्च गवि गवयेऽप्येकमेव। तेन सादृश्येन विशिष्टो गोपिण्डः पूर्वमेवाश्रयग्रहणकाले गृहीतः। कस्मादिति परप्रश्नाशङ्का सादृश्यविशिष्टगोपिण्डोपलम्भे हेतुः। उपलब्धियोग्यत्वादिन्द्रियग्रहणयोग्यत्वादित्यर्थः। अयं भावः। सादृश्यविशिष्टो गोपिण्डः किमुपलब्धेर्योग्योऽयोग्यो वा। योग्यत्वे उपलब्धियोग्यत्वादेव प्रागप्युपलब्धस्तद्विशिष्टो गोपिण्डः। प्रयोगश्चात्र गोनिष्ठं गवयसादृश्यमनुपलब्धगवयोऽपि गोत्वोपलम्भकाले लभते। तदानीं इन्द्रियसंबद्धत्वे सत्युपलम्भयोग्यत्वाद्गोत्ववदिति। अयोग्यत्वे उपलब्ध्यनुचितत्वेऽदृष्टवद्धर्माधर्मादिवन्न कर्हिचिदुपलभ्येत। उपलभ्यते चावश्यम्। तस्मात् स प्रागप्युपलब्ध एवेति

प्रतियोगिगवयग्रहणोपस्कृतसंस्कारात् गोस्मरणमेवेदं नोपमान-मिति ॥ २४ ॥

ननु यदि प्रागेव गवयसादृश्यविशिष्टो गोपिण्डः समुपलब्ध-स्तदा तन्निर्णयः कुतो नाभूदित्याशङ्क्याह ।

निर्विकल्पकेन तु प्रत्यक्षेण पूर्वं सादृश्यमुपलब्धं तेन तदोप-लब्ध्यभिमानो न भवतीति ॥

विकल्पो निश्चयः । स च प्रतियोग्यदर्शनान्नो जृम्भते । ततः सादृश्यग्रहणकाले प्रतियोगिगवयाभावान्निर्विकल्पकमेव प्रत्यक्षं प्रावर्त्तिष्ट । तेन च सादृश्यं जगृहे । तेन हेतुना । तदा गोग्रहणकाले । उपलब्ध्यभिमानो मया सादृश्यं गृहीतमेवेत्येवं रूपो नोल्लसतीति सादृश्यग्रहणं प्राक् निर्विकल्पकं जात-मेवेत्यर्थः ॥ २५ ॥

यदि निर्विकल्पकप्रत्यक्षेण सादृश्यप्रत्यक्षेण सादृश्यमुपलब्धं तर्हि तस्य संस्काराकरणात् पश्चात्तन्निश्चायिका स्मृतिः कथं स्यादित्याशङ्क्याह ।

निर्विकल्पकोपलम्भेऽपि *सहकारिसामर्थ्यादभावादिषु स-विकल्पिका स्मृतिर्दृष्टेति ॥

निर्विकल्पकप्रत्यक्षग्रहणेऽपि सहकारिसामर्थ्यादाश्रयादि-करणमाहात्म्यादभावे आदिशब्दात् सामान्ये च सविकल्पिका निश्चायिका स्मृतिः प्रेक्षाञ्चक्रे । अयं भावः । कस्यापि दिदृक्षया

* The text adds here "संस्कार" (See page 30, Line 17).

देवकुलं गत्वा तच्छून्यं प्रेक्ष्य व्यावृत्तं कश्चित्कश्चिदप्राक्षीत्। अत्रामुकोऽस्ति न वेति। ततस्तस्य निर्विकल्पकप्रत्यक्षगृहीताभावस्यापि तद्दर्शनसामर्थ्यात्तत्प्रश्नाच्च तत्र नास्त्येवेत्यभावप्रतिपत्तौ सविकल्पिका स्मृतिर्जायते। तथा निर्विकल्पकप्रत्यक्षेण गोत्वग्रहणकाले सादृश्यग्रहणेऽपि गवयदर्शनसहकारिसामर्थ्यात् स्मृतिर्निश्चयात्मिका भविष्यतीत्यनेन सदृशी मदीया गौरिति ज्ञानं स्मरणमेव नतूपमानम्॥ २६॥

लघुनैयायिकमते आप्तवाक्यश्रवणादनु गवये दृष्टे या संज्ञासंज्ञिसंबन्धप्रतिपत्तिः सोपमानम्। पृथक् प्रमाणत्वेन स्वीचक्राणा साप्यागमान्न भिद्यत इति वक्तुमाह।

संज्ञासंज्ञिसंबन्धप्रतिपत्तिरप्याप्तवचनकार्य्येति॥

अटव्यामटाट्यमानस्य पुंसो वनेचरवचःश्रवणादनन्तरं गोसन्निभे पिण्डे प्रेक्षितेऽस्य गवय इति संज्ञायां गवयसंज्ञया वाच्यः पिण्ड इति या संज्ञासंज्ञिसंबन्धघटना साप्याप्तवचोजन्या तन्मूलत्वान्न तूपमानकार्य्यम्। आप्तवाक्यातिदेशात्परोक्षे गवयपिण्डे कथं संज्ञासंज्ञिसंबन्धप्रतिपत्तिरिति चेत्। सादृश्ये सङ्केतकरणात् सादृश्यस्य च गोगवययोरेकत्वात्। अन्यथा व्यक्तीनामानन्त्यात्सङ्केताकरणे सति संज्ञाव्यवहारलोपापत्तेः॥ २७॥

पूर्वोक्तेऽर्थे युक्तिमाह।

तथा प्रश्नोत्तराभिधानादन्यप्रमाणानिर्देशाच्चेति॥

यथा नागरिकेणाटविको वाचा पृष्टः कीदृग्गवय इति। तथैवाटविकेन स यादृग्गौरिति वाचैवोत्तरयाञ्चक्रे। तत एव च

तस्य संज्ञासंज्ञिसंबन्धप्रतिपत्तिर्जज्ञे । न केवलमेतत् । तथा त्वमुपमानेनेदं जानीया इत्यन्यस्य प्रमाणस्याप्रतिपादनाच्च । संज्ञासंज्ञिसंबन्धज्ञानार्थमपि नोपमानं पृथक् प्रमाणत्वेनेष्टव्यम् । नैरर्थक्यादित्यर्थः ॥ २८ ॥

परमतमाशङ्कते ।

अस्य गवयशब्दः संज्ञेति प्रतिपत्तावुपमानसिद्धिस्तथा शब्दाश्रवणादिति चेदिति* ॥

न ह्याप्तवाक्यश्रवणकाले इदन्तया गवयपिण्डे संज्ञासंज्ञिसंबन्धज्ञप्तिरस्ति । अपि तु गोतुल्यस्य कस्यचिदर्थस्य गवयशब्दो वाचक इति सामान्यतः प्रतीतिस्ततः श्रोता तद्वाक्यात् सामान्येन गृहीतसंबन्धोऽरण्यानीं पर्य्यटन् गोसदृशं पिण्डं प्रेक्ष्य स्मृताप्तवाक्यार्थोऽस्य गवयशब्दः संज्ञेति यदा प्रतिपद्यते तदोपमानं पृथक् प्रमाणं भवति । अत्र हेतुः । तथेत्यादि । यथा प्रश्नकाले यादृग्गौस्तादृग्गवय इति शब्दश्रवणं तथा गवयवीक्षणक्षणेऽस्य गवयशब्दः संज्ञेति शब्दानाकर्णनात् ॥ २९ ॥

परिहरति ।

एवं तर्हि गौरयमित्येवं सङ्केतेऽस्य गोशब्दः संज्ञेति प्रतिपत्तौ प्रमाणान्तरं वाच्यं समानन्यायत्वादिति ॥

एवमिति आप्तवाक्यादेव संज्ञासंज्ञिसंबन्धप्रतिपत्तौ जातायां यदि प्रमाणान्तरमुपमानं स्वीक्रियते तर्हि केनाप्याप्तेन पुरो-

---

* The Text reads "तथा शब्दाश्च श्रावणादिति ।" (See page 31. Line 3).

वर्त्तिनि गोपिण्डे गौरयमित्येवं सङ्केते ग्राहिते यदाऽस्य गोपिण्डस्य गोशब्दः संज्ञेति प्रतिपत्तिस्तदापि प्रमाणान्तरं वाच्यं स्यात्। गोपिण्डे गवयपिण्डे च संज्ञासंज्ञिसंबन्धस्य समानन्यायत्वात् ॥३०॥

प्रसङ्गापादनेन पुनः परिहरति।

गोपिण्डान्तरेऽपि सङ्केतग्रहणे प्रमाणान्तराभिधानप्रसङ्ग इति॥

यथैकस्मिन् गोपिण्डे गौरिति सङ्केतग्रहेऽस्य गोशब्दः संज्ञेति प्रतिपत्त्यर्थं प्रमाणान्तरमिष्यते। तथा गोपिण्डान्तरेऽपि शब्दादन्यान्यगोपिण्डे च प्रमाणान्तरं वाच्यं भवेत्। तथाचानवस्थादिदोषापत्तिः॥ ३१ ॥

पुनः परमतं शङ्कते।

तथाशब्दानभिधानेऽपि प्रतिपादकप्रतिपाद्ययोरेवमभिप्राय इदृशस्य सर्वस्य गोशब्दः संज्ञेति सामर्थ्याद्द्वैधं प्रतिपत्तिरिति चेदिति॥

तथेत्यादि तथाशब्दोऽस्य गोशब्दः संज्ञेति शब्दस्तस्याप्रतिपादनेऽपि। प्रतिपादक इति संप्रतिपन्नो वक्ता। प्रतिपाद्य इति सन्दिग्धो विप्रतिपन्नो वा। सामर्थ्यमिति द्वयोरप्यूहनशक्तिविशेषः। केवलव्यतिरेकी वा। यथा गोशब्दोऽस्य सास्नादिमतो वाचकः। सति वृत्त्यन्तरे वृद्धैरत्र प्रयुक्तत्वान्न यदेवं न तदेवं यथा घट इति। द्वैधमिति प्रतिपादकगतत्वेन प्रतिपाद्यगतत्वेन च। अथवा द्वैधमिति पुरोवर्त्तिगोपिण्डगतत्वेन तज्जातीयगोपिण्डगतत्वेन च। अयमर्थः। अयं पिण्डो गौरिति सङ्केतग्रहणक्षणेऽस्य

गोशब्दः संज्ञेति वाक्यानुच्चारेऽपि सङ्केतग्राहकस्यायमाशयो यन्मयायं प्रतिपाद्यः। सर्वस्यापीदृशस्य सास्नादिमतः पिण्डस्य गौरिति सङ्केतः ग्राहितोऽस्ति पिण्डान्तरे स्वयमेव ज्ञास्यतीति प्रतिपाद्यस्याप्ययमाशयो यदहं प्रतिपादकेनेदृक्षस्य सास्नादिमतः सर्वस्यापि पिण्डस्य गौरिति सङ्केतं ज्ञापितोऽस्मीदृगन्योऽपि मया गोशब्देन वाच्य इति।

इत्युभयोः सामर्थ्यात् ऊहशक्तिविशेषात् प्रागुक्तकेवलव्यतिरेकिणोऽपि द्विधा प्रतिपत्तिर्भवति। ततः प्रमाणान्तराभिधानप्रसङ्गोऽयुक्त इति भावः॥ ३२॥

परोक्षपरिहारं स्वपक्षेऽपि प्रेक्षयति।

समानमेतदत्रापि गोसदृशो गवय इति शब्दादुभयोरेवमभिप्रायो गोसदृशस्यार्थस्य गवयशब्दः संज्ञेति सामर्थ्यादेवं प्रतिपत्तिरिति॥

अत्रापीति यादृग्गौस्तादृग्गवय इति स्थलेऽपि। उभयोरिति प्रतिपादकप्रतिपाद्ययोः। एवमिति यथा त्वन्मते प्रतिपाद्यप्रतिपादकाभिप्रायवशात् प्रमाणं विनापि संज्ञासंज्ञिसंबन्धप्रतिपत्तिस्तथास्मन्मतेऽपि। शेषं व्यक्तम्॥ ३३॥

नन्वाप्तवाक्यादप्रत्यक्षे गवये कथं संज्ञासंज्ञिसंबन्धघटनेत्याशङ्क्य परिहरति।

न च प्रत्यक्ष एवार्थे संज्ञासंज्ञिसंबन्धप्रतिपत्तिरप्रत्यक्षेऽपि शक्रादौ संज्ञासंज्ञिसंबन्धप्रतिपत्तिदर्शनादिति॥

शक्रादाविति। यः सुराणामधीशः स्वाराज्यभोक्ता च स

शक्त इत्यनया प्रक्रियया प्रत्यक्षवदप्रत्यक्षेऽप्यर्थे संज्ञासंज्ञिसंबन्धघटना सुघटैव । न चैवं प्रत्यक्षं संज्ञाकर्मेत्यस्य मुख्यसूत्रस्य विरोधः । अत्र प्रत्यक्षशब्दस्य संज्ञानिवेशयोग्यवस्तुनि दृढ़प्रमाणावगमार्थत्वात् ॥ ३४ ॥

अथ प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्यक्षपादप्रणीतप्रमाणभेदाभिधानात्सूत्रविरोधं शङ्कते ।

सूत्रविरोध इति चेदिति ॥

इहागमे उपमानान्तर्भावेन प्रमाणत्रित्वाभिधानात् मुख्यसूत्रेषूपमानपार्थक्येन प्रमाणचतुष्टाभिधानात् विरोधः सम्पन्न इत्यर्थः ॥ ३५ ॥

सूत्रविरोधं परिहरति ।

न । प्रमाणनिग्रहस्थानाभ्यां दृष्टान्तहेत्वाभासादीनामिव प्रयोजनवशेन पृथगभिधानादिति ॥

प्रमाणेत्यादि । यथा प्रमाणनिग्रहस्थानाभ्यां कृत्वा लब्धानामपि दृष्टान्तहेत्वाभासादीनां मूलसूत्रे प्रयोजनवशात् पृथगभिधानं कृतं तथागमान्तर्भूतस्याप्युपमानस्य पृथगभिधानम् । अयं भावः । प्रमाणप्रमेयसंशयप्रयोजनेत्याद्यक्षपादोक्तमूलसूत्रे प्रमाणान्तर्गतोऽपि दृष्टान्तो निग्रहस्थानान्तर्गता अपि हेत्वाभासाः शिष्यशेमुषीसमुन्मेषकार्य्यवशाद्यथा पृथगुक्तास्तथागमान्तर्गतमप्युपमानं मूलसूत्रे पृथगुक्तमिति ॥ ३६ ॥

परोऽनुयुंक्ते ।

तर्हि प्रयोजनं वाच्यमिति ॥

उपमानपृथगभिधानस्येति शेषः ॥ ३७ ॥

प्रयोजनं व्यनक्ति।

*शब्दप्रामाण्यसमर्थनमिति ॥

उपमानपृथक्कथनस्य प्रयोजनमिति वाक्यशेषः ॥ ३८ ॥

परः पृच्छति।

कथमिति ॥

कथं शब्दप्रामाण्यसमर्थनमिति शब्दार्थः ॥ ३९ ॥

अथ समर्थनं पराक्षेपपूर्वं भवतीति प्राक् पराक्षेपमुपक्षिपति।

केचिदाहुः प्रत्यक्षानुमानविषयत्वे शब्दस्यानुवादकत्वं तद-विषयत्वे संबन्धाग्रहणादवाचकत्वमिति ॥

केचिदिति तायागताः। प्रत्यक्षेत्यादि प्रत्यक्षानुमानयोर्यो विषयः सोऽप्युपचारात् प्रत्यक्षानुमाने ते विषयो यस्यासौ प्रत्यक्षा-नुमानविषयः। यद्वा प्रत्यक्षानुमानयोर्विषय एव विषयो यस्ये-त्युष्ट्रमुखादय इति सूत्रेणैकविषयपदलोपी समासः। तद्भावः प्रत्यक्षानुमानविषयत्वं तस्मिन्। अनुवादकत्वमिति अन्यप्रमाण-गृहीतैकविषयत्वम्। तदविषयत्वे इति प्रत्यक्षानुमानविषया-विषयत्वे। संबन्धेति शब्दस्य विषयेण सह वाच्यवाचकभाव-संबन्धस्तद्ग्रहणम्। प्रत्यक्षानुमानाविषयत्वादेव। अवाचकत्वमिति अर्थाप्रत्यायकत्वम्। अयमर्थः। प्रमाणेन हि विषयवतैव भाव्यम्। विषयश्च दृश्यादृश्यरूपः प्रत्यक्षानुमानगम्यः। ततः

---

* The Text reads "उच्यते शब्दप्रामाण्यसमर्थनं प्रयोजनम्" ( See page 31, Line 15 ).

शब्दः प्रमाणं भवन् किं प्रत्यक्षानुमानविषयस्तदविषयविषयो वा। तत्र नाद्यः कल्पः सुजल्पः। प्रत्यक्षानुमानप्रमितार्थप्रमापकत्वेन शब्दस्यानुवादकत्वात्। प्रमाणान्तरगृहीतैकविषयत्वस्यैवानुवादकलक्षणात्। अनुवादकस्य तु स्मृतेरिवाप्रामाण्यभूमित्वात्। प्रयोगश्चात्र। शब्दोऽप्रमाणं प्रमाणान्तरप्रमितार्थप्रमापकत्वात् स्मृतिवदिति। द्वितीये तु प्रत्यक्षानुमानाविषयत्वेन वाच्यवाचकभावसंबन्धाग्रहणाच्छब्दस्यावाचकत्वं स्यात्। यतः शब्दार्थयोः संबन्धो वाच्यवाचकभावः स प्रत्यक्षगम्योऽनुमानगम्यो वा स्यात्। न च तद्विषयं स्वीकृतमिति॥ ४०॥

पदेनैवार्थः प्रतिपाद्यः। तत्र पदं सङ्केत्यतामित्याशङ्क्य परः प्राह।

पदार्थस्याप्रसिद्धत्वान्न पदेन संबन्धग्रहणमितरेतराश्रयत्वादिति॥

पदं सुप्तिङन्तं तस्यार्थोऽभिधेयस्तस्यान्यप्रमाणाविषयत्वेनाज्ञातत्वात्पदेनार्थस्य संबन्धग्रहणं न जाघट्यते। अत्र हेतुः। इतरेतराश्रयत्वादन्योन्याश्रयदोषापातादित्यर्थः। तथाहि पदेन पदार्थे प्रसिद्धे सति संबन्धग्रहणं संबन्धग्रहणे च सिद्धे पदेन पदार्थस्य प्रसिद्धिरित्यन्योन्याश्रयस्य प्रकटदोषत्वात्॥ ४१॥

ननु पदेन पदार्थसंबन्धग्रहणं मा स्म घटिष्ट वाक्यार्थेन तु पदार्थसंबन्धो ग्रहीष्यत इत्येतदपि निराचष्टे।

वाक्यार्थस्तु प्रसिद्धानां पदानामन्वयमात्रमिति॥

उच्यते स्वोचितोऽर्थोऽनेनेति वाक्यम्। पदानामन्योन्यापेक्षाणां

संहतिर्वाक्यमिति वाक्यलक्षम। तस्यार्थो वाच्यः। प्रसिद्धानामिति केनापि प्रमाणेन पूर्वं रूढ़ानाम्। पदार्थानामिति स्पष्टम्। अयमर्थः। केनापि प्रमाणेन प्रसिद्धा ये पदार्थास्तेषामाकाङ्क्षासन्निधियोग्यतावशाद्यदन्वयमात्रं मिथो मेलमात्रं स वाक्यार्थो भवति। तस्माच्च कथं संबन्धावबोधस्तत्रासामर्थ्यात्। एवं च वाक्यार्थासंबन्धाग्रहणे पदार्थप्रसिद्धिस्तदप्रसिद्धौ च वाक्यार्थप्रसिद्धिरिति कथं शब्दस्य प्रामाण्यम्। एतत्पर्य्यन्तं केचिदाहुरित्यनेन संबन्धः॥ ४२॥

एवं पराक्षेपमुपक्षिप्य तत्परिहारायोपमानोपायमाह।

तन्निराकरणार्थमुपमानं निदर्शनार्थत्वेन पृथगुक्तम्। यथा कार्य्यार्थिनोऽप्रसिद्धगवयस्य प्रसिद्धगोसादृश्यं उपादायोपमानाख्येन वाक्येन संज्ञासंज्ञिसंबन्धप्रतिपत्तिः क्रियते तथा किञ्चिन्निमित्तमुपादाय शक्रादिपदपदार्थयोरपीति। तस्मादन्यार्थत्वात् न सूत्रविरोध इति॥

तन्निराकरणार्थमिति परोक्तशब्दाप्रामाण्यापास्तये। निदर्शनार्थत्वेनेति दृष्टान्तप्रयोजनत्वेन। कार्य्यार्थिन इति गवयस्वरूपं जिज्ञासोः। किञ्चिन्निमित्तमिति सुरेश्वरत्वसहस्राक्षत्वादिकम्। गद्यान्तःस्थेनापीतिशब्देन संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः क्रियत इत्यनुवर्त्तनीयम्। अयमर्थः। यथा केनाप्याप्तेनाविज्ञातगवयस्य स्वरूपं जिज्ञासमानस्य पुंसस्तत् ज्ञातं गोसादृश्यं गृहीत्वा यादृग्गौस्तादृग्गवय इत्युपमानवाक्येन परोक्षेऽपि गवये संज्ञासंज्ञिसंबन्धो

ज्ञाप्यते। तथा प्रसिद्धशक्रादिपदार्थस्य शक्रादिपदार्थं जिज्ञासो-स्तज्ज्ञानेन देवेश्वरत्वसहस्राक्षत्वादिना निमित्तेन परोक्षेऽपि शक्रादौ संज्ञासंज्ञिसंबन्धो बोध्यते। न च वाच्यं यस्य निमित्त-मप्यप्रसिद्धं तस्य कथं संज्ञासंज्ञिसंबन्धो बोध्यत इति। तस्य सर्वथा विप्रतिपन्नस्योपदेशं प्रति बालमूकवदनधिकारात्। ततश्च मूलसूत्रे प्रागुक्तयुक्त्या परोक्तशब्दाप्रामाण्यानिस्तर्हणायोपमानस्य पृथक्कथनादत्रागमान्तर्भावेऽपि न सूत्रविरोधः। तथा प्रत्यक्षानु-मानविषयत्वे शब्दस्यानुवादकत्वाद्यदप्रामाण्यमुक्तं तन्न युक्तम्। तथाभ्युपगमात्। अन्यथा तवापि प्रत्यक्षानुमानयोर्मिथो विषय-परिच्छेत्तृत्वेनाप्रामाण्यापातात्। शब्दप्रामाण्यस्य प्रागपि सम-र्थितत्वाच्च ॥ ४३ ॥

ननु यदि मूलसूत्रकर्त्तुरुपमानं पृथक् प्रमाणमिति नेष्टं तर्ह्याक्षेपपूर्वं परीक्षाञ्चक्रे किमितीत्याह।

परीक्षा त्वर्थापत्तिवत्प्रमाणस्य सतः प्रमाणेष्वन्तर्भावज्ञापनार्थ-मिति॥

यथा पृथक् प्रमाणत्वेनानिष्टाप्यर्थापत्तिः प्रमाणत्वेन परीक्षा-नुमानेऽन्तरभावि तथोपमानमपि प्रमाणतया परीक्षागमेऽन्तर-भावीति भावः ॥ ४४ ॥

ननु मूलसूत्रे उपमानान्तर्भावो निषिद्धस्ततः सूत्रविरोधः तदवस्थ एवेति परिहरति।

अन्तर्भावस्त्वनुमान एवास्य *यथाश्रुतोऽपि निराकृतो नागमे इति ॥

यथाश्रुत इति यथा पूर्वैर्व्यवसितः । अयं भावः । उपमानं परार्थानुमानं सादृश्यलिङ्गेन परोक्षार्थानुमापकत्वात् धूमानुमानवदित्यनुमानेन परार्थानुमाने उपमानस्य योऽन्तर्भावः स प्रतिषिद्धो मूलसूत्रे नत्वागमे । कथमनुमानेऽस्यान्तर्भावनिषेध इति चेत् । उच्यते ।

नन्वनुमानं लिङ्गलिङ्गिभावेन दृष्टम् । तत उपमाने सादृश्यं चेल्लिङ्गं तर्हि लिङ्गी कः । गौश्चेन्न । तस्य प्राक् परिच्छिन्नत्वात् । गवयश्चेन्न । तस्य प्रत्यक्षविषयत्वात् । सादृश्यं चेन्न । तस्य प्रागपि लिङ्गत्वेनोक्तत्वात् । अतोऽनुमानलक्षणाभावादुपमानस्यानुमानान्तर्भावो न युक्तः । प्रयोगश्चात्र । उपमानं नानुमानमाप्तवाक्येनार्थप्रतिपादकत्वात् पुत्रकामो यजेदित्यादि वाक्यवदिति ॥ ४५ ॥

ननु मूलसूत्रे चतुष्टाभिधानादिह त्रित्वाभिधानं विरुद्धमित्याशङ्क्य परिहरति ।

चतुष्टाभिधानं सूत्रेषु पञ्चत्वादिनिराकरणार्थं न त्रित्वनिषेधार्थं प्रमाणसिद्धत्वादन्तर्भावस्येति ॥

चतुर्णां प्रमाणानां भावश्चतुष्टम् । मूलसूत्रे प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति यत्प्रमाणचतुष्टमुक्तं तद्यथा प्रमाणानि

---

* The word "यथाश्रुतोऽपि" is omitted in the text ( See page 32. Line 9 ).

घञ्च षड्वा न भवन्ति तदर्थम् । न पुनः प्रमाणत्रित्वनिवृत्त्यर्थम् । अत्र हेतुः । आगमे उपमानान्तर्भावस्य प्रमाणसिद्धत्वात् । अन्तर्भावकं च प्रमाणं प्रागेवोपन्यस्तम् ॥ ४६ ॥

परमतं शङ्कते ।

त्रित्वानभिधानादयुक्तमिति चेदिति ॥

मूलसूत्रे चतुष्ट्वं पञ्चत्वादिनिषेधार्थमुक्तं न त्रित्वनिषेधार्थमिति यदुच्यते । तदयुक्तम् । सूत्रान्तः क्वापि त्रित्वानभिधानात् यदि सूत्रकारस्त्रित्वमेवाभ्यलषिष्यत्तर्हि तदेव क्वाप्यभणिष्यन्न चाभाणीत्तस्मात्सूत्रविरोधस्तदवस्थ इति भावः ॥ ४७ ॥

परिहरति ।

न । अस्य सूत्रकारस्यैवं स्वभावत्वाद्यत् सिद्धान्तमपि क्वचिन्नाभिधत्ते यथा कृत्स्नैकदेशविकल्पादिनाऽवयविनिराकरणे इति ॥

सूत्रकारः प्रमाणत्रित्वाभिलाषुकोऽपि यत्त्रित्वं नाचख्यौ । तन्नायुक्तमस्य सूत्रकर्त्तुरेवंप्रकृतिकत्वात् । एवं कथमित्याह । यत्सिद्धान्तेत्यादि । यदसौ क्वचित्सिद्धान्तमपि स्वपक्षस्थापनमपि नाचष्टे । कुत्रेदं दृष्टमित्याह । यथा कृत्स्नैकदेशेत्यादि । क्वचिदक्षपादाचार्यस्य शास्त्रे आत्मवादे प्रस्तुते शाक्यकृतः कृत्स्नैकदेशविकल्पादिनाऽवयविनो निरासोऽस्ति । तथाहि । किमवयव्यवयवेषु वर्त्तते न वा । आद्ये कल्पे किं कार्त्स्न्येनैकदेशेन वा । कार्त्स्न्येन वृत्तावेकस्मिन्नेवावयवे परिसमाप्तत्वात्तदनेकावयववृत्तित्वं न स्यात् । एकदेशेन वृत्तौ निरंशत्वं तस्योपगतं विरुध्येत ।

सांशत्वे वा तेऽप्यंशास्ततो भिन्ना अभिन्ना वा भवेयुः। भिन्नत्वे पुनरप्यनेकांशवृत्तेरेकस्य कार्त्स्न्यैकदेशविकल्पनानतिक्रमादनवस्थादोषप्रसङ्गः। अभिन्नत्वे न केचिदंशाः स्युः। द्वितीयेऽवयव्येव न स्यादवयवसंबन्धाभावादित्यवयविनि निराकृतेऽपि सूत्रकारः शाक्यं प्रत्यवयविव्यवस्थापनाय स्वसिद्धान्तं नावातीतरल्लीलाशीलत्वात्। अवयवस्थापने सिद्धान्तस्यैवं कार्त्स्न्यैकदेशादिविकल्पानां स्वपरसिद्धान्तयोरसिद्धत्वादस्वीकार एव परीहारः। तर्हि कथं तत्र स वर्त्तत इति चेत्। स्वरूपेणाश्रयाश्रितभावलक्षणया वृत्त्या वर्त्तते। तथाच क्व भवदुक्तविकल्पजल्पावकाशः॥ ४८॥

किमर्थं स्वसिद्धान्तानभिधानमित्याह।

शिष्याणामूहादिशक्त्यतिशययुक्तानामेवात्राधिकारज्ञापनार्थमिति॥

ऊहः स्वबुद्ध्या सिद्धान्तावबोधः। आदिशब्दादाक्षेपक्षमत्वादि। तच्छक्तिवैभवभासुराणामेव च्छात्राणामत्र स्वन्यायशास्त्रेऽध्ययनाधिकारप्रबोधनार्थं स्वसिद्धान्तानभिधानम्। तैरेवमस्मच्छास्त्रमध्येतुमधिकर्त्तव्यं ये स्वबुद्ध्याक्षेपसमाधी विदधीरन्निति भावः॥ ४९॥

उपसंहरति।

तस्मात् स्थितमुपमानं शब्देऽन्तर्भूतमिति॥

स्पष्टम्॥ ५०॥

अथार्थापत्तिमनुमानेऽन्तर्भावयति।

अर्थापत्तेरप्यनुमानेऽन्तर्भावोऽविनाभावबलेनार्थप्रतिपत्तिसाधनत्वादिति ॥

दृष्टः श्रुतो वार्थो येन विना नोपपद्यते तस्यार्थस्य परिकल्पनमर्थापत्तिस्तस्या अप्यनुमानेऽन्तर्भावो भवति। न केवलं आगमे उपमानान्तर्भाव इत्यपेरर्थः। अत्र हेतुः। अविनाभावेत्यादि। अविनाभावः स्वभावतः साध्येन साधनस्य व्याप्तिः। तद्बलेन तत्सामर्थ्येन साध्यार्थज्ञप्तिहेतुत्वात्। अयं भावः। प्रत्यक्षादिप्रमाणषट्कपरिच्छिन्नः पीनत्वाद्यर्थो रात्रीभोजनादि विनान्यथा असम्भवन्नन्यमदृष्टं रात्रिभोजनादिरूपमर्थं यत्र कल्पयेत् सार्थापत्तिः प्रमाणं स्यात्। तदुक्तं

प्रमाणषट्कविज्ञातो यत्रार्थोऽनन्यथाभवन्।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥

एतादृश्यर्थापत्तिरविनाभावबलेनार्थं गमयन्त्यनुमानमेव। तथा ह्यर्थापत्त्युत्थापकोऽर्थोऽन्यथानुपपद्यमानत्वेनानवगतोऽवगतो वा अदृष्टार्थकल्पकः स्यात्। आद्ये कल्पेऽतिप्रसङ्गः। द्वितीयेऽन्यथानुपपद्यमानत्वावगमोऽर्थापत्तेः प्रमाणान्तराद्वा। प्राचि पक्षेऽन्योन्याश्रयोऽन्यथानुपपद्यमानत्वेन ज्ञातादर्थादर्थापत्तिरर्थापत्तेरन्यथानुपपद्यमानत्वज्ञप्तिरिति। द्वितीये साध्यधर्मिणि भूयो दर्शनं विपक्षेऽनुपलम्भो वा। प्रथमपक्षे भूयो दर्शनादेव साध्यज्ञप्तावर्थापत्तेर्वैयर्थ्यम्। द्वितीयेऽनिश्चितो निश्चितो वा प्राग्विकल्पे तत्पुत्रादेरपि गमकत्वापत्तिः। द्वैतीयिकेऽनुमानमेवार्थापत्तिनिश्चितान्यथानुपपन्नत्वस्यानुमानरूपत्वात्। प्रयोगश्चैवम्।

अर्थापत्तिरनुमानं अविनाभावबलेनार्थप्रतिपत्तिसाधनत्वाद्धूमादिवदिति ॥ ५१ ॥

अविनाभावमेव दर्शयति ।

अन्यथा नोपपद्यत इत्युक्ते सत्येवोपपद्यत इति लभ्यते । अयमेवाविनाभाव इति ॥

एतदर्थो दृष्टान्तेन स्पष्टीक्रियते । यथा पीनो देवदत्तो दिवा न भुंक्ते तर्ह्यवश्यं रात्रौ भुंक्ते । भोजनं विना पीनत्वस्यान्यथानुपपत्तेरिति । कश्चिद्देवदत्तं पीनं दृष्ट्वा किञ्चिदाह । अहो देवदत्तः पीनः परं दिवा न भुंक्ते । तेनोक्तं यदि दिवा न भुंक्ते तर्ह्यवश्यं रात्रौ भुंक्ते तद्विना पीनत्वस्यायोगात् । अत्र पीनत्वं साधनं रात्रिभोजनं च साध्यम् । पीनत्वं च रात्रिभोजने सत्येवोपपद्यमानमन्यथानुपपद्यमानं रात्रिभोजनेन सहाविनाभाव्येव । ततोऽविनाभावविभावितस्वभावार्थापत्तिरनुमानम् । तथा जीवन् देवदत्तो गृहे नास्ति । तर्ह्यवश्यं बहिरस्ति जीवत्त्वस्यान्यथानुपपत्तेरित्याद्यर्थापत्त्युदाहरणानि स्वयमूह्यानि ॥ ५२ ॥

परमतं शङ्कते ।

यत्र सामान्याकारेणान्वयग्रहणं नास्ति । यथा मुख्यकारणत्वाप्रतिबद्धशक्त्योस्तत्रार्थापत्तिः पृथक् प्रमाणमिति चेदिति ॥

अन्वयेति । साध्यसामान्येन साधनसामान्यस्य व्याप्तिरन्वयः । कारणत्वमिति । मुख्यकारणानि समवाय्यादीनि त्रीणि यदनन्तरमेव कार्य्यनिष्पत्तिस्तत्र समवायिकारणं द्रव्यमेव । समवायि-

कारणप्रत्यासन्नमेव धृतसामर्थ्यमसमवायिकारणम्। साहाय्यमात्रे व्याप्रियमाणं निमित्तकारणम्। तेषां भावो मुख्यकारणत्वम्। अप्रतिबद्धशक्तिरिति। न प्रतिबद्धा मणिमन्त्रादिभिः शक्तिर्यस्येत्यप्रतिबद्धशक्तिरग्न्यादिः। अयमर्थः। कार्य्यनिष्पत्तिः सकलकारणसाकल्यात् दृष्टादृष्टभेदेन कारणानां भूयस्त्वात्। न च कारणसाकल्यं क्वचिदस्मदादिप्रत्यक्षं किन्तु कार्य्यनिष्पत्त्युन्नेयम्। तथाऽप्रतिबद्धशक्तिर्वह्न्यादिः स्फोटादिकार्य्यमर्जति। अप्रतिबद्धशक्तित्वमपि च दुर्लक्ष्यम्। प्रतिबन्धकानां मणिमन्त्रादीनामनन्तत्वात्। ततो यत्र मुख्यकारणत्वस्याप्रतिबद्धशक्तेश्च वह्न्यादेर्न्नमौ प्रत्यक्षाप्रवृत्त्या सामान्याकारेणाप्यन्वयव्याप्तिग्रहणं नास्ति तत्रान्वयाभावादनुमानानुत्थानेऽर्थापत्तिः पृथक् प्रमाणं भविष्यति। यथा अत्र सन्ति सकलसहकारिकारणानि कार्य्योत्पत्त्यन्यथानुपपत्तेस्तथा अत्रास्त्यप्रतिबद्धशक्तिर्वह्न्यादिः स्फोटादिकार्य्यान्यथानुपपत्तेश्च ततोऽर्थापत्त्यन्तर्भावोऽनुमाने न युक्त इति भावः॥ ५३॥

परिहरति।

न। तत्रापि केवलव्यतिरेक्यनुमानाव्यतिरेकात्। केवलव्यतिरेक्यर्थापत्तिरिति संज्ञाभेदमात्रमिति॥

केवलव्यतिरेकीति। पक्षव्यापकोऽविद्यमानसपक्षो विपक्षाद्व्यावृत्तो हेतुः केवलव्यतिरेकी। अव्यतिरेकेति अनधिकत्वम्। केवलव्यतिरेक्यनुमानेनैवार्थापत्तिसाध्यसिद्धावर्थापत्तिप्रमाणाधिक्यं न भवतीत्यर्थः। कथं केवलव्यतिरेकीति चेदुच्यते। कार्य्योत्पत्ति-

पूर्व्वक्षणे कारणानि सकलसहकारिसमेतानि समस्तप्रतिबन्धक-शून्यानि वा अनन्तरमेव कार्य्योत्पादकत्वान्न यदेवं न तदेवं यथा केवलमृन्मणिप्रतिबद्धो वह्निर्वेति । ततः केवलव्यतिरेक्यर्थापत्त्यो-र्नाम्नैव भेदो न वस्तुत इति भावः ॥ ५४ ॥

पुनः परमतं शङ्कते ।

अन्वयाभावान्न तदनुमानमिति चेदिति ॥

यदेवान्वयव्याप्तिमत्तदेवानुमानम् । केवलव्यतिरेकी त्वन्वया-भावादनुमानं न भवति । किन्त्वर्थापत्तिरित्यर्थः ॥ ५५ ॥

परिहरति ।

न । केवलान्वयिनो व्यतिरेकाभावेन प्रमाणान्तरत्वप्रसङ्गा-दिति ॥

यद्यन्वयाभावात् केवलव्यतिरेकी नानुमानमिष्यते । तर्हि केवलान्वय्यपि नानुमानं किं तु प्रमाणान्तरं स्यात्तुल्यन्याय-त्वात् ॥ ५६ ॥

प्रसङ्गान्तरमप्याह ।

अपिच प्रत्यक्षादिभेदानां किञ्चिद्वैधर्म्यात् प्रमाणान्तरत्व-प्रसङ्ग इति ॥

यद्यन्वयव्याप्त्यभावात् केवलव्यतिरेकी पृथक् प्रमाणमिष्यते तदा निर्विकल्पकसविकल्पकयोर्योगियोगिरूपाणां प्रत्यक्षभेदानां कार्य्यकरणानुभयात्मनामनुमानभेदानां दृष्टादृष्टरूपयोः शब्द-भेदयोश्च किञ्चिद्वैसदृश्यात् पृथक् पृथक् प्रामाण्यमनुषज्ज्ये-तेति ॥ ५७ ॥

उपसंहरति ।

तस्मादविनाभावबलेनार्थप्रतिपादकत्वा*दर्थापत्तिरनुमान-मिति ॥

स्पष्टम् ॥ ५८ ॥

अथ सहस्रे शतं सम्भवतीति ज्ञाने सम्भवः पृथक् प्रमाणं परैः स्वीचक्रे तदप्यनुमानेऽन्तर्भावयति ।

बहुत्वसंख्याविषयत्वे सत्यल्पसंख्याविषयस्य सर्वत्रोपलब्धत्वान्ना-नुमानात्सम्भवो भिद्यत इति ॥

सम्भवति बहुत्वे त्वल्पत्वमिति सम्भवः । समुदायेन समुदायि-नोऽवगमः सम्भव इति सम्भवलक्षणम् । बहुत्वसंख्याविषयत्वे सहस्रादिसंख्यागोचरत्वे सत्यल्पसंख्याविषयस्य शतादिद्रव्यरूपस्य सर्वत्र संख्यादौ प्राप्तत्वादनुमानात् सम्भवो न पृथग्भवति । समुदायसमुदायिनोरविनाभावत्वेनानुमानरूपत्वात् । तथाहि विवादास्पदं सहस्रं स्वसमुदायिशतवत्सहस्रत्वात् पूर्वगणित-सहस्रवदिति । एवं खार्य्यां द्रोण इत्याद्यपि ॥ ५९ ॥

अथाभावमागमादिप्रमाणत्रितये यथासम्भवमन्तर्भावयति ।

अभावस्य तु त्रिष्वपि यथासम्भवेनान्तर्भावस्तथाहि कौरवाद्य-भावप्रतिपत्तिरागमादिति ॥

प्रत्यक्षादिप्रमाणानुत्पत्तिरभाव इत्यभावलक्षणम् । तदुक्तम् ।

---

* The text reads ॰ प्रतिपादकत्वाविशेषा ॰ ( See page 33, Line 9-10 ).

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते।

सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि॥

अभावस्य प्रामाण्यस्थलमिदम्।

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।

वस्त्वसत्तावबोधार्थं तत्राभावप्रमाणतेति॥

प्रत्यक्षादिक्रमेणान्तर्भावे वक्तुं युक्ते प्रत्यक्षाभावस्य बहु-वक्तव्यत्वाद्वैपरीत्येनाभिधानं कृतम्। त्रिष्विति। प्रत्यक्षानुमाना-गमेषु। आगमादिति व्यासवचनात्॥ ६०॥

अनुमानेऽभावान्तर्भावं विभावयति।

आत्मादिषु रूपाद्यभावप्रतिपत्तिरनुमानादिति॥

आत्मादीत्यत्रादिशब्दाद्व्योमादिग्रहः। रूपादीत्यत्रादिशब्दा-द्रसादिग्रहः। अनुमानं यथा। आत्मा रूपादिमुक्तो विभुत्वे सत्य-मूर्त्तद्रव्यत्वात्। व्योमादिवदिति। व्योम रूपरसगन्धशून्यमस्पर्श-वत्त्वाद्दिगादिवदिति॥ ६१॥

प्रत्यक्षेऽन्तर्भावमाह।

भूतलादिषु घटाद्यभावप्रतिपत्तिः प्रत्यक्षादिन्द्रियव्यापार-भावभावित्वादिति॥

घटशून्यं भूतलमिह भूतले घटो नास्ति वेत्यादिरूपा घटादिवस्त्वभावज्ञप्तिः प्रत्यक्षप्रमाणात् भवति। अत्र हेतुः। इन्द्रियेत्यादि। इन्द्रियव्यापारभावे एव भवतीत्येवं शीला इन्द्रिय-व्यापारभावभाविनी तद्भावस्तत्त्वं तस्मादिन्द्रियप्रवृत्तिपूर्वकत्वादि-त्यर्थः।

ननु प्रत्यक्षेण क्ष्मातलमुपलक्ष्य प्रतियोगिनं संस्मृत्याक्ष्यानपेक्षं मानसमभावज्ञानमुन्मालसीति। तदुक्तम्।

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायते क्षानपेक्षया॥

इति चेत्। न। विकल्पासहत्वात्। तथाहि। प्रत्यक्षेण क्ष्मातलादिवस्तु घटादिप्रतियोगिभिः संसृष्टमसंसृष्टं वा गृह्यते। नाद्यः कल्पः। प्रतियोगिसंसृष्टस्य भूतलादिवस्तुनः प्रत्यक्षेण ग्रहणे तत्र प्रतियोग्यभावग्राहकत्वेनाभावप्रमाणस्य प्रवृत्तिविरोधात्। प्रवृत्तौ वा न प्रामाण्यम्। प्रतियोगिनः सत्त्वेऽपि तत्प्रवृत्तेः। द्वितीये त्वभावप्रमाणवैयर्थ्यम्। प्रत्यक्षेणैव प्रतियोगिनां घटादीनामभावप्रतिपत्तेः। तथाच प्रयोगः। निर्घटं भूतलमित्यादिज्ञानमिन्द्रियजमिन्द्रियान्वय-व्यतिरेकानुविधायित्वाद्रूपादिज्ञानवदिति॥ ६२॥

परमतं शङ्कते।

अन्यत्र तद्भावभावित्वं पर्य्यवसितमिति चेदिति॥

अन्यत्रेति भूतलाद्यधिकरणे। तद्भावभावित्वमिति इन्द्रियव्यापारभावभावित्वम्। सम्बद्धं वर्त्तमानं च गृह्यते चक्षुरादिना इति न्यायादिन्द्रियसम्बन्धो धरातल एव स्थितो नाभावग्रहणे इत्यर्थः॥ ६३॥

परिहरति।

न। रूपादिष्विव बाधकाभावादिति॥

इन्द्रियव्यापारो नान्यत्र पर्य्यवसितो रूपे इत्यादिशब्दाद्रसादिष्विन्नाभावेऽपि बाधकाभावात् । कोऽर्थः । यथा चक्षुरादीन्द्रियव्यापारे सितं रूपं मधुरो रस इत्यादि ज्ञानमुज्जृम्भते । न तत्र किञ्चिद्बाधकं न चान्यत्रेन्द्रियव्यापारस्तथाऽभावग्रहणेऽपीति इन्द्रियजनितमेवाभावज्ञानम् ॥ ६४ ॥

पुनः परं शङ्कते ।

सम्बन्धाभावो बाधक इति चेदिति ॥

इन्द्रियाणां संयोगः समवायो वा सम्बन्धो वस्तुना सहोल्लसति । अभावस्य तु तुच्छरूपत्वात् संयोगः समवायो वा न सम्भवतीत्यर्थः ॥ ६५ ॥

परिहरति ।

न । स्वपरपक्षयोरसिद्धत्वादिति ॥

यस्त्वया सम्बन्धाभावो बाधक उक्तः स स्वपक्षे त्वत्पक्षे परपक्षे मत्पक्षे चासिद्ध इति ॥ ६६ ॥

सम्बन्धाभावस्यासिद्धत्वं दर्शयति ।

स्वपक्षे तावद्रूपादिष्विवापरोक्षानुभवकार्य्यानुमेयो योग्यताख्यः सम्बन्धः । परपक्षेऽपि संयुक्तविशेषणविशेष्यभावादिरिति ॥

स्वपक्षे इति मीमांसकपक्षे । रूपादिष्वित्यत्रादिशब्दाद्रसादिपरिग्रहः । अपरोक्षानुभवेति साक्षात्कारिज्ञानम् । अनुमेय इति । अनुमानज्ञेयः । योग्यतेति स्वस्वविषयग्रहणोचितता । अयमर्थः । त्वत्पक्षे इन्द्रियाणां अतिसौक्ष्म्यादप्रत्यक्षत्वे इन्द्रियार्थयोर्योग्य-

ताख्यः सम्बन्धोऽस्ति। साक्षादनुभावान्यथानुपपत्तेरित्यनुमानानुमितः। स च योग्यताख्यः सम्बन्धो यथा रूपादिष्वस्ति तथा भावानुभवेऽपि। तथा परपक्षेऽपि मत्पक्षे चक्षुःसंयुक्तं भूतलं विशेष्यन्तस्य घटाभावो विशेषणमिति स्वरूपः। संयुक्तविशेषणविशेष्यभावादिः सम्बन्धोऽभावग्रहणेऽस्त्येव। आदिशब्दात् संयुक्तसमवाय संयुक्तसमवेतसमवाय समवाय-समवेतसमवायसम्बन्धचतुष्टयसंबद्धविशेषणविशेष्यभावग्रहः। तथाच प्रयोगः। अभावानुभव इन्द्रियसम्बन्धपुरस्सरोऽपरोक्षानुभवकार्य्यत्वात् घटाद्यपरोक्षानुभववदिति। ततः त्वदुक्तः सम्बन्धाभावोऽसिद्ध इत्यर्थः॥ ६७॥

पुनः परमतमाशङ्कते।

संयोगसमवायरहितस्य विशेषणविशेष्यभावानुपपत्तिरिति चेदिति॥

अभावस्यावस्तुत्वात्संयोगसमवायराहित्यम्। तेन विशेषणविशेष्यभावाघटनेति भावः॥ ६८॥

परिहरति।

न। विशिष्टप्रत्ययवशेन तत्सिद्धिरितीति॥

यद्यप्यभावस्य तुच्छरूपत्वात्संयोगः समवायो वा नोपपद्यते। तथापि भूतलं घटाभावविशिष्टमिति विशिष्टप्रत्ययबलेन विशेषणविशेष्यभावसम्बन्धसिद्धिर्भवति। यथा गोमानिति। गोमानित्यत्र हि संयोगसमवायसम्बन्धाभावेऽपि विशिष्टप्रत्ययवशेन गवास्तित्वसम्बन्धसिद्धिरस्तीति सिद्धा घटाद्यभावप्रतिपत्तिः प्रत्यक्षादिति॥ ६९॥

अथैतिह्यमागमेऽन्तर्भावयति।

अनिर्द्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमैतिह्यमागमेऽन्तर्भूतमिति॥

अत्रैतिह्यमिति लक्ष्यम्। शेषन्तु लक्षणम्। इतिहशब्दः सम्प्रदायवाचकोऽव्ययः। इतिहैव ऐतिह्यम्। अनिर्द्दिष्टप्रवक्तृकमिति। अनिर्द्दिष्टो न निर्णीतः स्वयं दृष्टत्वेन प्रवक्ता यस्येत्यनिर्द्दिष्टप्रवक्तृकम्। प्रवादपारम्पर्य्यमिति वृद्धपरम्परायातो वाक्यप्रघोषः। अनिर्द्दिष्टप्रवक्तृकं यत्प्रवादपारम्पर्य्यं तदैतिह्यं नाम प्रमाणमागमेऽन्तर्भवति। कोऽर्थः। इदमैतिह्यं सत्यमसत्यं वा यदि सत्यं तर्ह्याप्तवाक्यत्वादागम एव। तथाच प्रयोगः। ऐतिह्यमागम आप्तवाक्यत्वात् पुत्रकामो यजेदित्यादिवाक्यवदिति। अथासत्यं तर्ह्यप्रमाणमेवेति॥ ७०॥

उदाहरति।

यथेह वटे यक्षः प्रतिवसतीति॥

स्पष्टम्॥ ७१॥

कैश्चिच्चेष्टा पृथक् प्रमाणत्वेन स्वीकृतास्ति तामप्यागमेऽन्तर्भावयति।

*प्रयत्नजनिता शरीरतदवयवक्रिया चेष्टा नाद्यशास्त्रादिसमयबलेन पुरुषाभिप्रायविशेषमर्थविशेषञ्च गमयन्ती नागमाद्भिद्यते लिप्यक्षरादर्थप्रतिपत्तिवदिति॥

* The reading adopted by the commentator here, differs somewhat from the text ( See page 34, Line 8-11 ).

प्रयत्नजनिता शरीरतदवयवक्रिया चेष्टेति चेष्टालक्षणम्। चेष्टते विविधक्रियया प्राणी अस्यामिति चेष्टा। प्रयत्नेति। इच्छापूर्वको हस्तादिव्यापारः प्रयत्नः। इदं च पदं वातप्रकोपोत्पन्नवाक्यादिकपदव्यवच्छेदार्थम्। तदवयवेति करादयः शरीरावयवाः। नाट्यशास्त्रं भरतकविप्रणीतो ग्रन्थः। आदिशब्दाल्लोकचेष्टादिग्रहः। समयबलेनेति सङ्केतवशेन। अभिप्रायविशेषमिति आह्वानविसर्जनादिकम्। अर्थविशेषमिति व्यङ्ग्यरूपम्। इच्छापूर्विका देहतदवयवकरादिचेष्टा सङ्केतवशादाशयविशेषं व्यङ्ग्यरूपमर्थं वावबोधयन्त्यागम एव भवति। न पृथक् प्रमाणमित्यर्थः। लिप्यक्षरादीति दृष्टान्तः। यथा पुरुषाभिप्रायविशेषमर्थविशेषञ्चावगमयतो लिपिरूपादकाराद्यक्षरादर्थज्ञप्तिर्नागमाद्भिद्यते। तथा चेष्टापि। यदि चेष्टायाः पृथक् प्रामाण्यमिष्यते। तर्हि लिप्यक्षरादीनामपि पृथक् प्रामाण्यमिष्टव्यं स्यात्तुल्यन्यायत्वात्। ततश्चेष्टा नागमाद्भिद्यते। समयबलेनार्थप्रतिपादकत्वाल्लिप्यक्षरादर्थप्रतिपत्तिवदिति ॥ ७२ ॥

उपसंहरति।

तदेवं व्यवस्थितमेतत्त्रीण्येव प्रमाणानीति ॥

व्यवस्थितमिति प्रमाणतर्कयुक्त्या निष्टङ्कितम्। त्रीण्येवेत्येवकारश्चतुष्ट्वादिनिरासार्थः। एतेन तत्समर्थितं यदुक्तमाद्यपरिच्छेदे तत्त्रिविधं प्रत्यक्षमनुमानमागम इति ॥ ७३ ॥

प्रमाणं प्रमेयनिष्ठं भवतीति मनसिकृत्य शिष्यः प्रमेयं पृच्छति ।

किं पुनरेभिः प्रमाणैः प्रमातव्यमिति ॥

प्रमातव्यमिति ज्ञातव्यम् ॥ ७४ ॥

प्रत्युत्तरयति ।

उच्यते । प्रमेयमिति ॥

प्रमीयते ज्ञायते इति प्रमेयम् । विषयो गोचर इति यावत् ॥ ७५ ॥

पुनः पृच्छति ।

किं लक्षणमिति ॥

स्वपरजातीयव्यावर्त्तको धर्मो लक्षणम् । किं स्वरूपमित्यर्थः ॥ ७६ ॥

पुनरुत्तरयति ।

यद्विषयं ज्ञानमन्यज्ञानानुपयोगित्वेनैव निःश्रेयसाङ्गं भवति तत्प्रमेयमिति ॥

यद्विषयमिति यद्गोचरम् । अन्यज्ञानेत्यादि । विवक्षितप्रमेयात् वस्त्वन्तरज्ञानान्यन्यज्ञानानि तेषामनुपयोगित्वेनानपेक्षित्वेन । निःश्रेयसमिति मोक्षः । अत्रान्यज्ञानेत्यादि विशेषणेन प्रमाणज्ञानस्यात्मादिज्ञानोपयोगित्वेन मोक्षाङ्गत्वात्प्रमाणव्यवच्छेदः । कोऽर्थः । यस्य ज्ञानमज्ञानमनपेक्ष्यैव मोक्षं साधयति तत्प्रमेयं भवति । इदं तु प्रमेयस्य विशेषलक्षणमन्यथाद्यपरिच्छेदे प्रमाविषयः प्रमेयमिति सामान्यलक्षणस्योक्तत्वात्पौनरुक्त्यापत्तेः ॥ ७७ ॥

तेन किं कार्य्यमित्याह ।

तदेव तत्त्वतो ज्ञातव्यं सर्वदा भावयितव्यञ्च । न कीटसंख्यादि तज्ज्ञानस्यानुपयोगादितीति ॥

तदेवेति प्रागुक्तलक्षणलक्षितं प्रमेयम् । तत्त्वत इति परमार्थतः । भावयितव्यमिति पुनः पुनश्चेतसि चिन्तनीयम् । अनुपयोगादिति । अमोक्षाङ्गत्वेनेति शेषः । तदेव प्रमेयं तत्त्वतो ज्ञेयं यन्मोक्षाङ्गं भवति । न कोटिकोटिकीटकाः सन्त्यत्रेत्यादि ज्ञानममोक्षाङ्गत्वेन तस्य व्यर्थत्वात् । तदुक्तम् ।

सर्वं पश्यतु वा मा वा तत्त्वमिष्टन्तु पश्यतु ।
कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥ ७८ ॥

प्रमेयभेदमाह ।

तच्चतुर्विधं हेयं १ तस्य निर्वर्त्तकं २ हानमात्यन्तिकं ३ तस्योपाय ४ इतीति ॥

हेयमिति । हीयतेऽवश्यं परित्यज्यत इति हेयमेकं प्रमेयम् । तस्येति । तस्य हेयस्य निर्वर्त्तकं जनकं द्वितीयम् । हानमिति । तस्येति पदस्यात्राप्यनुवर्त्तनात्तस्य हेयस्यात्यन्तिकं हानं सर्वथा त्यागस्तृतीयम् । तस्येति । तस्यात्यन्तिकहानस्योपायो हेतुश्चतुर्थं प्रमेयं भवति ।

ननु सूत्रकृतात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति द्वादशविधं प्रमेयमुक्तम् । तन्मध्ये आद्यन्त्यौ द्वावुपादेयौ शेषा दश हेयाः ।

त्वयात्वत्र तच्चतुर्विधमुक्तमतोऽत्र सूत्रविरोध इति चेन्न। द्वादशविधस्यापि प्रमेयस्य चतुष्ट्वेन भाव्यमानस्य मोक्षाङ्गता भवतीति न विरोधः॥ ७९॥

अथ हेयस्वरूपं निरूपयति।

अत्र हेयं दुःखमनागतमेकविंशतिप्रकारमिति॥

अत्र ग्रन्थत्वादक्रमेऽप्यनागतं दुःखं हेयमिति हेयस्वरूपं ज्ञेयम्। अनागतमिति। अतीतस्योपभुक्तत्वाद्वर्त्तमानस्योपभोगं विना दुस्त्यजत्वादनागतमेव दुःखं हेयं भवति॥ ८०॥

तत् प्रकारानाह।

शरीरं षड़िन्द्रियाणि षट् विषयाः षट् बुद्धयः सुखं दुःखञ्चेति॥

तत्र शरीरं प्रतीतम्। षड़िन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि। षट्विषयाः गन्धरूपरसस्पर्शशब्दस्मृतिसङ्कल्पाः। षट्बुद्धयः षड़िन्द्रियाणाम्। षट्विषयाः ज्ञप्तयः। आह्लादरूपं सुखम्। तद्विपरीतं दुःखम्। एवं दुःखमेकविंशतिप्रकारं भवति॥ ८१॥

शरीरादीनां दुःखत्वे हेतुमाह।

तत्र शरीरं दुःखायतनत्वाद्दुःखम्। इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात्सुखमपि दुःखानुषङ्गाद्दुःखम्। दुःखन्तु बाधनापीड़ासन्तापात्मकं मुख्यत एवेति॥

शरीरं मुख्यं दुःखं न भवति। किन्तु दुःखस्यायतनत्वाद्गृहत्वात् दुःखम्। देहावच्छिन्नस्यैवात्मनो दुःखानुभवात्। इन्द्रि-

याणि विषया बुद्धयश्च प्रागुक्तस्वरूपास्तयोऽपि दुःखनिर्वर्त्तकत्वाद्दुःखमिन्द्रियादिवशंवदानामवश्यं दुःखीभवनात्। सुखं तु वैषयिकादिकं दुःखप्रसञ्जनाद्दुःखं सुखस्य दुःखाविनाभावित्वात्। मुख्यं दुःखं तु बाधनाद्यात्मकम्। लोके शास्त्रे च तस्यैव मुख्यवृत्त्या दुःखशब्दवाच्यत्वात्। एतेन शरीरादीनामौपचारिकं दुःखत्वमावेदितम्। तेषामपि दुःखहेतुत्वादिति॥ ८२॥

द्वितीयं प्रमेयमाह।

तस्य निर्वर्त्तकमसाधारणं कारणमविद्यालक्षणे धर्माधर्माविति॥

तस्येति हेयस्यैकविंशतिविधदुःखस्य। निर्वर्त्तकमित्यस्य पदस्य व्याख्या असाधारणं कारणमिति। यद्वा। किञ्चिन्निर्वर्त्तकं साधारणमपि भवति तद्व्यवच्छेदार्थमसाधारणं कारणमिति पदम्। किं निर्वर्त्तकमित्याह। अविद्येत्यादि। अविद्यादीनां स्वरूपं स्वयमेव वक्ष्यत्यत्र नोच्यते। यद्यपि धर्मः सुखस्य हेतुस्तथापि सुखस्य दुःखाविनाभावित्वात् दुःखहेतुरेवोक्तः॥८३॥

अविद्यादीनां स्वरूपमाह।

सम्यगध्यात्मविद्भिः प्रदर्शितार्थविपरीतज्ञानमविद्या सह संस्कारेणेति॥

सम्यगध्यात्मविद्भिरिति। तत्त्वज्ञैर्यो यथार्थो दर्शितस्तस्य विपर्य्यस्ततया अनित्ये वस्तुनि नित्यत्वेनानात्मत्वेन यत् ज्ञानं सा सुखदुःखहेतुभूतेन वासनापरपर्य्यायेण संस्कारेण सहिताऽविद्या भवति। मिथ्याज्ञानमविद्येत्यर्थः। तदुक्तम्।

अनित्ये नित्यबुद्धिर्या याशुचौ शुचिवासना ।

अनात्मन्यात्मधी र्येयमविद्योक्ता शरीरिणामिति ॥ ८४ ॥

तृष्णां लक्षयति ।

पुनर्भवप्रार्थनं तृष्णेति ॥

पुनर्भवो विशिष्टदेहभोगादिस्तत्प्रार्थना पुनः पुनर्वाञ्छा तृष्णा भवति ॥ ८५ ॥

धर्माधर्मावाह ।

सुखदुःखयोरसाधारणौ हेतू धर्माधर्माविति ॥

सुखदुःखे प्रतीते । तयोरसाधारणावसामान्यौ यौ हेतू तौ धर्माधर्मौ भवतः । सुखहेतुर्धर्मः दुःखहेतुरधर्म इत्यर्थः ॥ ८६ ॥

तृतीयं प्रमेयं प्ररूपयति ।

हानं दुःखविच्छेदः । आत्यन्तिकमिति न कदाचित्कथञ्चि-दुःखसम्बन्ध इत्यर्थ इति ॥

हानमित्येतस्य दुःखविच्छेद इति व्याख्या । आत्यन्तिकमिति पदस्य न कदाचिदित्यादि व्याख्या । आत्यन्तिकपदेन कादा-चित्कसुखजनितो दुःखोच्छेदो व्यवच्छिद्यते ॥ ८७ ॥

चतुर्थं प्रमेयमाह ।

तस्योपायस्तत्त्वज्ञानमात्मविषयमिति ॥

तस्यात्यन्तिकदुःखहानस्यात्मविषयं क्षेत्रज्ञसम्बन्धि तत्त्वज्ञान-मुपायो हेतुर्भवति । तत्त्वज्ञानमित्युक्ते यस्य वस्तुनो यो भाव-स्तत्तस्य तत्त्वमिति वचनात् सामान्यवस्तुतत्त्वज्ञानमपि तदुपायः

स्यात्तद्व्यवच्छेदायात्मविषयमित्युक्तम् । तात्त्विकमात्मज्ञानमात्य-न्तिकदुःखत्यागहेतुरित्यर्थः ॥ ८८ ॥

आत्मतत्त्वज्ञानमन्तर्बुद्ध्यात्मनः सम्यक् श्रवणादिभिः सम्पद्यते नान्यथेत्यत्रार्थे श्रुतिं दर्शयति ।

तथाचोक्तम् ।

आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।

ज्ञात्वा च सततं ध्येय एते दर्शनहेतव इति ॥

आत्मेति क्षेत्रज्ञः । वा एवार्थे । रे इति वक्तुः स्त्रियाः सम्बोधनम् । द्रष्टव्य इति बहिरनुमानादिना । देहान्तश्च सुख्यहं दुःख्यहमित्यादि प्रत्ययेन ! निदिध्यासितव्य इति निध्यातुमिष्टव्यो दिदृक्षितव्य इति यावत् । उपपत्तिभिरिति तर्कसम्पर्क-कर्कशाभिर्युक्तिभिर्युक्तयश्च पुरो वक्ष्यन्ते । एते श्रुतिश्रवणमनन-ध्यानादयः क्षेत्रज्ञसाक्षात्कारे हेतवो भवन्ति । श्रुतिवाक्यादिभिः सम्यक् ज्ञात्वात्मा ध्यातव्य इत्यर्थः ॥ ८९ ॥

नन्वात्मज्ञानात् किं फलं भवतीत्याह ।

तरति शोकमात्मविदिति ॥

शोकमिति संसारक्लेशरूपम् । आत्मानं विदित्वा संसारावार-पारं तरतीति भावः ॥ ९० ॥

एक एव हि भूतात्मा देहे देहे व्यवस्थितः ।

एकधा बहुधाचैव दृश्यते जलचन्द्रवत् ॥ इत्यादिवचनात् एकएवात्मेत्यद्वैतवादिमतमपाकरोति ।

स द्विविधः। परश्चापरश्चेति ॥

स इत्यात्मा। पर इति परमात्मा। अपर इति संसारी। अनयोः स्वरूपं स्वयमेव वक्ष्यति पुरः ॥ ९१ ॥

आत्मद्वैते श्रुतिसंवादमाह।

तथाचोक्तम्। द्वे ब्रह्मणी वेदितव्ये परञ्चापरञ्चेत्यादीनि ॥

ब्रह्मणी इति। आत्मानौ। एतेन ब्रह्माद्वैतं निरस्तं ज्ञेयम्। ननु तात्त्विकं ब्रह्मैव केवलमस्ति सर्वं वै खल्विदं ब्रह्म नेह नानास्ति किञ्चनेति न्यायात्तद्व्यतिरिक्तः सर्वः प्रपञ्चो मिथ्या प्रतीयमानत्वात् शुक्तिशकले कलधौतज्ञानवदिति चेन्न। विकल्पाक्षमत्वात्। तथाहि मिथ्यात्वं किमत्यन्तासत्त्वमुतातत्त्वेन तत्त्वमनिर्वाच्यत्वं वा। प्राच्ये पक्षद्वयेऽसत्ख्यातिविपरीतख्यातिप्रसङ्गः। तार्त्तीयिकपक्षेऽत्वनिर्वाच्यत्वं किं निरुक्तिराहित्यं प्रतीत्यगोचरत्वं वा। नाद्यः। घटोऽयं पटोऽयमिति निर्णीतोक्तेः सर्वत्र सद्भावात्। न द्वितीयः। प्रत्यक्षेण नियतसंस्थानतया समस्तवस्तुप्रतिभासात्। यथा प्रतिभासते न तथेति चेन्न। विपरीतख्यातिप्रसक्तेरित्यलम् ॥ ९२ ॥

तत्र परं लक्षयति।

तत्रैश्वर्य्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान् महेश्वरः सर्वज्ञः सकलजगद्विधातेतीति ॥

ऐश्वर्य्यमप्रतिहतेच्छत्वं तेन युक्तः। ऐश्वर्य्यमिन्द्रादिष्वप्यस्तीति तद्व्यवच्छेदाय संसारधर्मैरीषदप्यसंस्पृष्ट इति। संसारधर्मा रागद्वेषमोहादयस्तैरस्पृष्टः। संसारधर्मास्पृष्टत्वं लयस्थयोगिष्वप्यस्तीति

तन्निरासाय पर इति। परः श्रेष्ठः। परत्वं सांख्याभिमते प्रधानेऽप्यस्तीति तदपास्तये भगवानिति। भगवान् पूज्यः। भगवत्त्वमुत्तमेष्वप्यस्तीति तत्परिहाराय महेश्वर इति। महेश्वरो महानधिपतिः। महेश्वरत्वमर्वाचीनेष्वपि सम्भवतीति तद्विनिवृत्तये सर्वज्ञ इति। सर्वज्ञो विश्ववेदी। सर्वज्ञत्वं योगिष्वपि भवतीति तदपास्तये सकलजगद्विधाता विश्वस्रष्टा। एवमैश्वर्य्यादिगुणविशिष्टः परमात्मा परः चेतज्ञो भवति। कश्चित्त्वैश्वर्य्यविशिष्ट इति १ संसारधर्मैरीषदप्यस्पृष्ट इति २ परो भगवान् महेश्वरः सर्वज्ञ इति ३ सकलजगद्विधातेति ४ चतुर्लक्षणीं परमात्मनो मन्यते। यथायुक्तमर्थो ग्राह्यः सुधीभिः॥ ९३॥

शिष्यः पृच्छति।

स कथं ज्ञातव्य इति॥

प्रत्यक्षत्वाभावात् केन प्रकारेण ज्ञेय इत्यर्थः॥ ९४॥

प्रत्युत्तरयति।

अनुमानादागमाच्चेति॥

स्पष्टम्॥ ९५॥

तत्रानुमानं दर्शयति।

तथाहि विवादाध्यासितमुपलब्धिमत्कारणकमभूत्वाभावित्वाद्वस्त्रादिवदिति॥

विवादाध्यासितमिति भूभूधरादिकम्। उपलब्धीत्यादि। उपलब्धिमान् बुद्धिमान् कारणं निदानं यस्य तदुपलब्धिमत्कारणकं बुद्धिमत्पूर्वकमित्यर्थः। अभूत्वेत्यादि। प्रागभूत्वा अनुत्पद्य

पश्चाद्भवतीत्येवं शीलमभूत्वाभावि तद्भावस्तत्त्वं तस्मात्। अत्र व्याप्तिः स्वयमेव कार्य्या। अयमर्थः। यथा वस्त्रादिकं प्रागभूत्वा पश्चाद्भवत् बुद्धिमत्तन्तुवायपूर्व्वकम्। तथा भूभूधरादिकमपि प्रलयकाले भूत्वा पश्चात् प्रादुःषत् बुद्धिमत्पूर्व्वकं सिद्ध्यतीति कर्त्तृसिद्धिः। न चास्यासिद्धताबन्धकीसम्बन्धश्चिन्त्यः। पक्षे हेतोर्निश्चितवृत्तित्वात्। अन्यतरासिद्धोऽयं हेतुरिति चेत्। न। हेत्वन्तरेण साध्यमानत्वात्। तथाहि विवादाध्यासितमभूत्वाभावि विशिष्टरचनावत्त्वात् प्रासादादिवदिति। नापि विरुद्धता व्योमादिभ्यो निवृत्तत्वात्। नाप्यनैकान्तिकता विपक्षादत्यन्तव्यावृत्तेः। नापि कालात्ययापदिष्टता प्रत्यक्षाद्यबाधितधर्म्मिणि वृत्तत्वात्। नापि प्रकरणसमता स्वपरपक्षसिद्धौ हेतोस्त्रैरूप्याभावात्।

अथ भूभूधरादिकं बुद्धिमत्पूर्व्वकं न भवति। सशरीराजन्यत्वाद्व्योमवदिति प्रत्यनुमानबाधितोऽसौ हेतुरिति चेन्न। अङ्कुरादिभिरनैकान्तिकत्वात्॥ ८६॥

नन्वस्मिन्ननुमाने व्याप्तिबलात्कर्त्तृमात्रस्यैव सिद्धिर्न पुनर्विशिष्टकर्त्तुरित्याशङ्क्याह।

सामान्यव्याप्तेरनवद्यत्वेन निराकर्त्तुमशक्यत्वात्ततः सामान्यसिद्धौ पारिशेष्यात्कार्य्यविशेषाच्च कर्त्तृविशेषसिद्धिश्चित्रादिकार्य्यविशेषात्तत्कर्त्तृविशेषसिद्धिवदिति॥

सामान्यव्याप्तेरिति यदभूत्वाभावि तदुपलब्धिमत्कारणकमिति सामान्यव्याप्तेः। अनवद्यत्वेनेति असिद्धत्वादिदोषशून्यत्वेन। पारिशेष्यादिति प्रसक्तप्रतिषेधेऽन्यत्र प्रसङ्गात् शिष्यमाणः

प्रत्ययः पारिशेष्यं तस्मात्। कार्य्यविशेषादिति क्षित्यादिकार्य्य-वैशेष्यात्। अयमर्थः। प्रागुक्ता सामान्यव्याप्तिस्तावन्निर्दोषत्वात् केनापि प्रतिहन्तुं न शक्यते। ततः सामान्यव्याप्तेः सामान्येन कर्त्तृसिद्धौ जातायामस्मदादिषु कर्त्तृत्वप्रसक्तावस्मदादिभिः क्षित्यादेर्जनयितुमशक्तत्वेन पारिशेष्यात् क्षित्यादिकार्य्यवैशेष्याच्च कर्त्तृविशेषसिद्धिर्भवति। चित्रादिदृष्टान्तेन यथा विशिष्ट-चित्रादिदर्शनाद्विशिष्टचित्रकृदादितत्कर्त्तृसिद्धिस्तथेति। तथाच प्रयोगः। क्षित्यादिकं विशिष्टकर्त्तृजन्यं विशिष्टकार्य्यत्वाद्विशिष्ट-चित्रादिवदिति।

ननु कर्त्तृवैशिष्ट्यसिद्धावपि शरीर्य्येव कर्त्ता सिद्ध्यति। न तद्विलक्षणः। तथाहि ईश्वरः शरीरी कर्त्तृत्वादस्मदादिवदिति। शरीरित्वे च कथं तस्य क्षित्यादिकर्म्मनिष्णात्वम्। तथाच प्रयोगः। ईश्वरः क्षित्यादिकर्त्ता न भवति शरीरित्वादस्मदादिवदिति चेन्न। हेतोराश्रयासिद्धत्वात्। सिद्धौ वा शरीरित्वकर्त्तृत्वसाधक-प्रमाणाभ्यां बाधः। ननु कर्त्तुरशरीरत्वं चेदभिप्रेतं तर्हीश्वरः कर्त्ता न भवत्यशरीरित्वान्मुक्तात्मवदिति न कर्त्तृत्वसिद्धिरिति चेन्न। शरीरप्रेरकेणात्मनानैकान्तिकत्वात्॥ ९७॥

अथ परात्मसद्भावे आगमं दर्शयति।

*एको रुद्रो न द्वितीयोऽवतस्थे य इमांल्लोकानीशत ईशनीभि-रित्यागमाच्चेति॥

---

* The Text reads ० द्वितीयोऽथ तस्थे सूर्य्य इव इमां ० ( See page 36. Line 6 ).

एक एव रुद्रः परमात्मास्ति । द्वितीयो नावतस्थे न स्थितः । ईशते प्रभवन्तीतीशिन्यः शक्तय इच्छाज्ञानक्रियारूपास्ताभिर्य इमांल्लोकान् जगन्ति ईशते स्वस्वजनितकर्मफलोपभोक्तृत्वेन नियमयति । ईशत इत्यत्र वैदिकत्वादेकवचने शक् । क्वापि न द्वितीयाय तस्थे इति पाठः । तत्र द्वितीयायेति सहार्थे तृतीयास्थाने चतुर्थी । ततो द्वितीयेन सह न तस्थे किन्त्वेक एवेत्यर्थः । तस्थे इत्यात्मनेपदं वैदिकत्वात् । चशब्दादन्योऽप्यागमो ज्ञेयः ॥९८॥

अपरात्मस्वरूपमाह ।

संसारफलोपभोक्तानन्तोऽपर* इति ॥

संसारफलं सुखदुःखादिकं तदास्वादकोऽनन्तोऽनेकविधोऽपरः संसार्यात्मा भवति । संसारि फलोपभोक्तेत्यनेन परमात्मन्यतिव्याप्तिनिवृत्तिः । अनन्त इत्यनेन ब्रह्माद्वैतव्यवच्छित्तिः ॥ ९९ ॥

तस्यातिसौक्ष्म्यादप्रत्यक्षत्वे तत्साधकमनुमानमाह ।

स खलु बुद्ध्यादिकार्य्याणां आश्रयभूतोऽनुमातव्य इति ॥

स इत्यात्मा । बुद्ध्यादीत्यत्रादिशब्दात् सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मादिग्रहः । आश्रय इत्याधारः । आत्मा बुद्ध्यादिकार्य्याणामाधारतयानुमानेन ज्ञेय इत्यर्थः । अनुमानं यथा । बुद्ध्यादयः क्वचिदाश्रिताः कार्य्यत्वाद्गुणत्वात् चापादिवदिति । पुरस्तादिन्द्रियादीनां निषेत्स्यमानत्वेन पारिशेष्यादात्माधार इति ॥ १०० ॥

---

* The text reads "जीवोऽपरः" ( See page 36, Line 8 ).

कार्य्यमपि किमपि निराधारं भविष्यतीत्याशङ्क्याह।

न हि कार्य्यमनाधारं किञ्चिदुपलब्धमिति॥

यत् कार्य्यं तत्सर्वं साधारमिति भावः॥ १०१॥

नन्विन्द्रियाणि विषया वा बुद्ध्यादीनामाधारो भविष्यति। न त्वात्मेत्याशङ्क्याह।

न चेन्द्रियाणामाश्रयत्वं युक्तमुपहतेन्द्रियस्य विषयस्मरणायोगादिति॥

इन्द्रियाणां चक्षुरादीनां बुद्ध्याद्याधारत्वं युक्तं न भवति। अत्र हेतुः उपहतेत्यादि। उपहतमिन्द्रियं यस्य। विषयस्मृत्यघटनात् यदि इन्द्रियं बुद्ध्याद्याधारो भवेत् तदोपहतेन्द्रियो न किञ्चित् स्मरेदाधारविनाशे आधेयस्यापि विनाशात्। अस्ति च स्मरणमुपहतेन्द्रियस्यापि। तत इन्द्रियं तदाधारो न भवतीत्यर्थः॥१०२॥

नन्वेकस्मिन्निन्द्रिये उपहतेऽपीन्द्रियान्तरेण स्मरणं भविष्यतीत्याशङ्क्याह।

अन्यानुभूतेऽर्थेऽन्यस्य स्मरणादर्शनादिति॥

अन्येन्द्रियेणानुभूतेऽर्थेऽन्यस्येन्द्रियस्य स्मृत्यवीक्षणात्। न खलु नेत्रानुभूतं नासा स्मर्य्यते। अत्र प्रयोगः। इन्द्रियं नानुभावकं करणत्वाद्दात्रादिवदिति। अन्येन्द्रियानुभूतमन्येन्द्रियं न स्मरत्यन्यानुभूतत्वात् चैत्रानुभूतं मैत्रवदिति॥ १०३॥

ननु मा भूवन्निन्द्रियाणि बुद्ध्याद्याधारः किन्तु शरीरं घटिष्यत इत्याशङ्क्याह।

अतएव शरीरस्यापि बाल्यकौमारादिभेदभिन्नत्वादस्मरणमिति ॥

अन्यानुभूतमन्यो न स्मरतीत्यत एव न्यायात् शरीरस्यापि स्मरणं नोपपद्यते न केवलमिन्द्रियाणामित्यपिरर्थः । कुत इत्याह । बाल्येत्यादि । आदिशब्दात्तारुण्यवार्द्धक्यभेदग्रहः । अयमर्थः । अल्पपरिमाणावच्छिन्ने महापरिमाणस्यासम्भवाद्बालशरीरात्कौमार-तारुण्यवार्द्धकशरीराणि भिन्नानि । तेन यदि शरीराश्रयं चैतन्यं स्यात्तदा येन बालशरीरेणानुभूतं तन्नष्टं ततस्तरुणादिशरीराणां स्मरणं न स्यादन्यानुभूतेऽन्यस्मरणाभावादस्ति च स्मरणं तस्मान्न शरीराश्रयं चैतन्यम् । प्रयोगौ प्राग्वत् । बालशरीरवदिति । यथा शरीरं नानुभूतभावुकं करणत्वाद्दात्रादिवत् । तथा बालशरीरानु-भूतं तरुणशरीरं न स्मरति । अन्यानुभूतत्वाच्चैत्रानुभूतं मैत्रवदिति प्रयोगः । बालशरीरात् कौमारशरीरं पृथगित्यत्र किं प्रमाणमिति चेदुच्यते । विवादाध्यासिते परिमाणे भिन्नाश्रये हीनाधिकपरि-माणत्वात् घटशरावपरिमाणवदिति । परिमाणमेव विनंक्ष्यति न तु शरीरमिति चेन्न । विवादास्पदं परिमाणमाश्रयविनाशादेव विनश्यति परिमाणत्वात् मुद्गराभिहतविनष्टघटपरिमाणव-दिति ॥ १०४ ॥

उक्तन्यायातिदेशेन बौद्धमतेऽपि स्मरणं नोपपद्यत इत्याह ।

एतेन पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धेः कार्य्यकारणभावात् स्मरणमपास्तमन्यत्ववचनादिति* ॥

---

* The Text reads "अन्यत्वाविशेषादिति" ( See page 36. Line 15 ).

एतेनेति अन्यानुभूतेऽन्यस्य स्मरणं न भवतीति वचनेन । पूर्व्वबुद्ध्यनुभूतेत्यादि बौद्धराद्धान्ते नैरात्म्येऽपि पूर्व्वबुद्ध्यनुभूतमर्थमुत्तरबुद्धिः स्मरति कार्य्यकारणभावात् । स चैवम् । पूर्व्वबुद्धिर्व्वस्त्वनुभवति तदनु स्वसदृशीमुत्तरबुद्धिमुत्पाद्यात्मसंस्कारं तत्र निवेश्य क्षणिकत्वाद्विनश्यति । तत्र पूर्व्वबुद्धिः कारणमुत्तरबुद्धिः कार्य्यमेवं पूर्व्वोत्तरबुद्ध्योः कार्य्यकारणभावेन स्मरणं यदुक्तं तदपि निरस्तम् । द्वयोर्बुद्ध्योर्म्मिथो भेदेन कथनात् । अयं भावः । पूर्व्वोत्तरबुद्ध्योः कार्य्यकारणभावेऽपि भेदोऽस्ति न वा । नास्तीति चेत् कथं कार्य्यकारणभावस्तस्य भेदनिबन्धनत्वात् । अस्तीति चेत्तर्हि यथा चैत्रमैत्रयोरन्यत्वेन चैत्रानुभूतं मैत्रो न स्मरति । तथा पूर्व्वबुद्ध्यनुभूतमुत्तरबुद्धिर्न्न स्मरिष्यति । अन्यत्वेनाविशेषात् ॥ १०५ ॥

भेदेऽपि यदि पूर्व्वबुद्ध्यनुभूतं कार्य्यकारणभावादुत्तरबुद्धिः स्मरति । तदाचार्य्यानुभूतं शिष्यः स्मरेदत्रापि कार्य्यकारणभावस्य विद्यमानत्वादित्याशङ्क्य परः परिहरति ।

कार्पासे रक्ततावदिति चेदिति ॥

यथा कर्प्पासबीजे लाक्षादिरञ्जकद्रव्यनिष्पादिता रक्तता भेदसाम्येऽपि रक्तबीजसन्तान एव पुष्पादौ रक्ततां व्यनक्ति । न बीजान्तरसन्ताने । तद्वदुपाध्यायबुद्धिजन्मा संस्कारोऽपि स्वसन्तान एव स्मृतिमुद्भावयति । न शिष्यादौ भिन्नसन्तानत्वात् । तदुक्तम् ।

यस्मिन्नेव हि सन्ताने आहिता कर्म्मवासना ।

फलं तत्रैव सन्धत्ते कार्प्पासे रक्तता यथा ॥

ततश्चाचार्य्यानुभूतं शिष्यः स्मरेदिति त्वयोक्तो दोषो नात्र सावकाश इत्यर्थः ॥ १०६ ॥

परोक्तं परिहरति।

न। साधनदूषणाभावादिति ॥

स्वपक्षस्य साधनम्। परपक्षस्य दूषणम्। तयोरभावान्न युक्त एष कर्पासरक्तताख्यो दृष्टान्तः ॥ १०७ ॥

तमेव साधनदूषणाभावं विभावयति।

अन्वयाद्यभावान्न साधनमसिद्धत्वाद्यनुद्भावनान्न दूषणमिति ॥

अन्वयेति। सति सद्भावोऽन्वयव्याप्तिरादिशब्दादसत्यसद्भावो व्यतिरेकव्याप्तिः। असिद्धत्वादीति। अनिश्चितपक्षवृत्तित्वमसिद्धत्वमादिशब्दाद्विरुद्धत्वादिपरिग्रहः। अयमर्थः। दृष्टान्तो हि स्वपक्षसाधनाय परपक्षदूषणाय वा प्रयुज्यते। कार्पासे रक्ततावदिति त्वदुक्तो यो दृष्टान्तः स न स्वपक्षसाधनाय पूर्वज्ञानानुभूतमुत्तरज्ञानं स्मरति। कार्य्यकारणभावापन्नत्वात् कार्प्यासे रक्ततावदिति भवदनुमाने दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येनान्वयव्याप्त्यजनकत्वात्। यतो बौद्धमते कारणभूतायाः पूर्वबुद्धेर्निरन्वयविनाशाङ्गीकारात् तदुपरागो नोत्तरबुद्धौ संक्रामति। दृष्टान्ते च कार्प्यासे लाक्षारसरक्तिमा बीजविनाशात्परमाणुषु संक्रम्य द्व्यणुकादिव्याप्त्या कार्य्ये भवतीति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं स्पष्टम्। तथा यत्र न स्मृतिस्तत्र न कार्य्यकारणभावापन्नत्वमिति व्यतिरेकव्याप्तिरपि नास्ति। नापि परपक्षदूषणाय पूर्वज्ञानानुभूतार्थमुत्तरज्ञानं न स्मरति। ततो विभिन्नत्वादन्यसन्तानबुद्धिवदित्यत्र पर-

पक्षे हेतोरसिद्धत्वादिदोषानुद्भावनात्। तस्मादयुक्त एष दृष्टान्त इति साधूक्तम् ॥ १०८ ॥

किञ्च कार्पासरक्ततापि दृष्टान्तत्वेनाद्रियेत यदि त्वन्मते कार्प्पासे रक्ततोपपद्येत। सापि नोपपद्यत इत्याह।

न च कार्प्पासे निरन्वयविनाशोत्पादे रक्ततोत्पद्यते। कार्प्पासान्तरवदिति ॥

निरन्वयविनाश इति। निर्गतोऽन्वयो मुद्गरादिहेतुर्यंत्रासौ निरन्वयः स चासौ विनाशश्चेति निरन्वयविनाशस्तदुत्पादे तत्सम्भवे। अयमर्थः। कार्प्पासबीजे रक्तता तदोत्पद्यते यदि कतिपयक्षणावस्थायित्वं स्यात्। त्वन्मते तु सर्व्ववस्तु विनाशककारणाभावेऽपि विनश्यति। ततो यस्मिन् कार्प्पासबीजे रक्ततोत्पादिता तत्तदानीमेव काकनाशं नष्टं क्षणिकत्वात्। तत्सन्तानभूते कार्प्पासबीजे सन्तानान्तरकार्प्पासबीज इव रक्तता कौतस्कुतुत्पद्येत। अथ कार्पासबीजरक्तता स्वसन्तानबीजान्तरे रक्ततां जनयतीति चेन्न। विकल्पैर्भङ्गुरत्वात्। तथाहि। क्षणिका कार्प्पासरक्तता स्वक्षणे पूर्व्वं पश्चाद्वा कार्य्यमर्जेत्। नाद्यः कल्पः। समसमयभाविनि क्षणे व्यापाराभावात्। व्यापारे वा सव्येतरगोविषाणयोरिव कार्य्यकारणभावो विशीर्य्येत। तस्य पौर्व्वापर्य्यधुर्य्यत्वात्। न द्वैतीयिकः। स्वरूपेणासत्यास्तस्याः समुत्पादकत्वायोगात्। अन्यथानुत्पन्नः पिता पुत्रमुत्पादयेदविशेषात्। नापि तार्त्तीयिकः स्वक्षणादूर्द्ध्वं स्वयं विनष्टत्वात्। तदेवं क्षणिकत्वपक्षे रक्ततोत्पत्तिवत्

पूर्वबुद्धेरुत्तरबुद्ध्युत्पादस्यापि दुरुपपादत्वात् स्मरणं न कथञ्चित् सङ्गतिमङ्गति ॥ १०९ ॥

अथोक्तन्यायेनैव बौद्धाभिमतं क्षणिकत्वमपि कुट्टयितुमाह।

एतेनैव क्षणिकत्वं निरस्तं ज्ञेयमिति ॥

एतेनेति। बुद्ध्यात्मनोराश्रयाश्रयिभावव्यवस्थापनेन। यत्सत्तत् क्षणिकं संश्च घटादिरित्यादिसाधनसाधितं क्षणिकत्वं व्यपास्तं ज्ञेयम्। तथाहि। क्षणिकत्वे सत्त्वं हेतुस्तत्सत्त्वं किं प्रमेयत्वमर्थक्रियाकारित्वं वा। नाद्यः पक्षः। प्रमेयत्वस्य नित्यपक्षेऽपि विद्यमानत्वेनानैकान्तिकत्वात्। सर्ववस्तूनां क्षणिकत्वान्नित्यपक्ष एव नास्तीति चेन्न। क्षणिकत्वसाधकस्य हेतोरसिद्धत्वेन क्षणिकत्वस्याद्याप्यप्रसिद्धत्वात्। नापि द्वितीयः। क्षणिकत्वे क्रमयौगपद्याभ्यामर्थक्रियाकारित्वस्य दुर्घटत्वात्। तथाहि। क्षणिकोऽर्थः स्वामर्थक्रियां क्रमेण कुर्य्याद्यौगपद्येनोभयरूपेण वा। नाद्यःकल्पस्तस्याक्रमत्वात्। क्रमवत्त्वेऽपि वा कतिपयक्षणस्थायकत्वेन क्षणिकत्वभङ्गात्। न द्वितीयः। यौगपद्येनैकस्मिन्नेव क्षणे सकलकलाकलापव्यापिकार्य्यैकदम्बकस्य निष्पादितत्वात् द्वितीयादिक्षणे क्षणिकत्वेन तस्यासत्त्वात् सकलशून्यतापत्तेः। न तृतीय उभयपक्षोपक्षिप्तदोषानुषङ्गात्। इति सत्त्वहेतोरसिद्धत्वात् क्षत एव क्षणिकत्वपक्षः। तथाच प्रयोगः। नास्ति क्षणिकैकान्तोऽर्थक्रियाकारित्वविरहाद्ब्रह्माद्वैतवदिति ॥ ११० ॥

एवं क्षणिकत्वस्य युक्तिबाधानुद्बोध्य प्रत्यक्षबाधान् दर्शयति।

प्रत्यभिज्ञाख्येन च प्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं च गृह्यत इति ॥

प्रत्यभिज्ञेति। दर्शनस्मरणप्रभवं ज्ञानं प्रत्यभिज्ञाख्यं प्रत्यक्षम्। स एवायं स्फटिको यो मया पूर्वमदर्शीति। पूर्वोत्तरविवर्त्तवर्त्त्येकद्रव्यव्यवसायिप्रत्यभिज्ञाख्यप्रत्यक्षज्ञानेन स्फटिकादिपदार्थेष्वक्षणिकत्वमुपलक्ष्यते। यदि सर्वं क्षणिकमभविष्यत्तर्हि स एवायं स्फटिक इति प्रत्यभिज्ञा भगवती न प्रोदजृम्भिष्यत। प्रोज्जृम्भते चेयं तस्मात् क्षणिकत्वं नास्तीत्यर्थः॥ १११ ॥

परमतमाशङ्कते।

प्रदीपादिष्विव भ्रान्तमिति चेदिति ॥

यथैकस्मिन् प्रदीपे कृते तस्मिन् प्रनष्टे प्रदीपान्तरे च रचिते स एवायं प्रदीप इति प्रत्यभिज्ञा भ्रान्ता तथा स्फटिकादिष्वक्षणिकत्वग्राहिणी प्रत्यभिज्ञा भ्रान्तेत्यर्थः। प्रदीपादीत्यत्रादिशब्दाल्लूनपुनर्जातनखकेशादिग्रहः॥ ११२ ॥

परिहरति।

न। एकत्र बाध्यत्वेन भ्रान्तत्वे सर्वत्र भ्रान्तत्वकल्पनायामतिप्रसङ्गादितीति ॥

एकत्रेति प्रदीपादौ। सर्वत्रेति त्वदभिप्रेतनीलादिपरिज्ञानेऽपि। अयमर्थः। यदि प्रदीपाद्येकत्वग्राहिणि प्रत्यभिज्ञाख्यप्रत्यक्षेऽयं स प्रदीपो न भवति भिन्नकालजनितत्वात् प्रदीपान्तरवदित्यनुमानबाधात् भ्रान्ते सति स्फटिकादिष्वपि तद्भ्रान्तमित्युच्यते। तर्हि तत्राप्येकत्र नीलादिज्ञाने प्रमाणबाधाद्भ्रान्ते सति

नोत्पादिज्ञानं सर्वमपि भ्रान्तं स्यादित्यतिप्रसङ्गस्ततो लाभमिच्छतो मूलक्षतिरेव तथेति ॥ ११३ ॥

किञ्च क्षणिकत्ववादिनो मते भ्रान्तमपि प्रत्यभिज्ञाज्ञानं न सम्भवतीत्याह ।

अनभ्युपगमाच्च सादृश्यस्य क्षणिकत्वे भ्रान्तिबीजाभाव इति ॥

क्षणिकत्वे क्षणिकवादिमते सादृश्यस्यास्वीकारात् प्रत्यभिज्ञाया भ्रान्तिबीजं सादृश्यं तस्याभाव एव। अयं भावः। प्रदीपादौ प्रत्यभिज्ञाज्ञानस्य भ्रान्तत्वं यदुच्यते। तत् पूर्वोत्तरप्रदीपक्षणानां स्थैर्यरूपं सादृश्यमादृत्य। तत् सादृश्यं त्वयाभ्युपगम्यते न वा। यद्यभ्युपगम्यते तर्हि क्षणिकत्वपक्षक्षतिः। सादृश्यस्य नित्यत्वात्। नाभ्युपगम्यते चेत्तर्हि सादृश्यस्यास्वीकारात् त्वन्मते भ्रान्तिबीजमेव न स्यात्ततः प्रत्यभिज्ञाप्रत्यक्षेण स्फटिकादिष्वक्षणिकत्वं गृह्यत इति युक्तमुक्तम् ॥ ११४ ॥

अथ प्रमेयमुपसंहरति ।

तदेतत्सिद्धमेतत् शरीरादिव्यतिरिक्त आत्मा व्यापको नित्य इति ॥

शरीरादीत्यत्रादिशब्दादिन्द्रियग्रहः । शरीरादिव्यतिरिक्त इत्यनेन विशेषणेन तत् प्रत्युक्तम्। यदुक्तं वाचस्पतिना। पृथिव्यापस्तेजो वायुरिति तत्त्वानि। तत्समुदाये शरीरविषयेन्द्रियसंज्ञास्तेभ्यश्चैतन्यम्। तथा प्रत्येकमदृश्यमानचैतन्यान्यपि च भूतानि

समुदितावस्थानि चैतन्यं व्यञ्जन्ति। मदशक्तिवदिति। शरीरादीनामात्मत्वनिषेधकयुक्तीनामुक्तत्वात्।

ननु कायाकारपरिणतानि भूतान्येव स्वव्यतिरेकिणीं चेतनां विरचयन्ति। सा च कायाकारपरिणतेषु तेष्ववतिष्ठते। तदभावे तु तेष्वेव विलीयते। अतस्तद्व्यतिरिक्तो न कश्चिदात्मेति चेन्न। विचारासहत्वात्। तथाहि। किम्भूतानि भूतानि चेतनारचनायां व्याप्रियेरन्। किं सचैतन्यानि निश्चैतन्यानि वा। यद्याद्यः कल्पस्तर्हि तच्चैतन्यं तेभ्यो व्यत्यरैक्षीन्नवा। व्यत्यरैक्षीत् चेत्तर्हि भूतघटितदेहे सन्तिष्ठमानमपि तद्भूतविसदृशं स्वकारणमनुमापयतीत्यात्मा सिद्ध्यति। न व्यत्यरैक्षीच्चेत्। तर्हि सर्वभूतानामैक्यं स्यादेकचैतन्याभिन्नत्वात्तत्स्वरूपवत्। स्वस्वचैतन्याभिन्नानि भूतानि तेनायं दोषो न भवतीति चेन्न। तन्निष्पाद्यदेहेऽपि तज्जन्यवतुश्चैतन्यप्रसङ्गात्। चत्वार्य्यपि संयुज्यातिमहच्चैतन्यमारभत इति चेत्। न। चैतन्यानामन्योऽन्यं मिश्रीभावाभावेन संयोगविरोधात्। अन्यथा बह्वात्मचैतन्यानि संयुज्य महत्तमं चैतन्यं निर्वर्त्तेरन्। तन्न सचैतन्यानि भूतानि चेतनाविरचने व्यापर्त्तुमर्हन्ति। नापि निश्चैतन्यानि। तेषां नितान्तं वैलक्षण्येन चैतन्योत्पादायोगात्। अन्यथा कीरदूषकाः शाल्युत्पादने व्याप्रियेरन्। व्यापकत्वं नित्यत्वं च पुरो वक्ष्यति ॥ ११५ ॥

परः प्रश्नयति।

नित्यत्वं कुत इति चेदिति॥

यद्यप्युक्तानुक्रमेण प्राग् व्यापकत्वं प्रश्नयितुं युक्तम्। तथापि

यन्नित्यत्वं प्रश्नितं तन्नित्यत्वाद्व्यापकत्वं सेत्स्यतीति प्रश्नयितुरभिप्रायः। कुत इति हेतोः॥ ११६॥

प्रत्युत्तरयति।

अनादित्वादिति॥

अनादित्वमुत्पत्त्यादिराहित्यम्। तस्मादात्मनो नित्यत्वं सिद्ध्यति। प्रयोगश्चैवं आत्मा नित्यो भावत्वे सत्यनादित्वाद्व्योमवदिति। भावत्वे सतीति विशेषणं प्रागभावेऽपि व्याप्तिपरिहारार्थम्॥ ११७॥

अनादित्वमेवानुयुङ्क्ते।

तदेव कथमिति॥

तदेवेत्यनादित्वम्। कथमिति केन प्रकारेणेत्यर्थः॥ ११८॥

अनादित्वं साधयति।

जातमात्रे प्राणिनि जन्मान्तरानुभवसूचकस्मरणलिङ्गस्य हर्षभयशोकस्तन्याभिलाषादेरुपलम्भादिति॥

तत्कालोत्पन्ने देहिनि। जन्मान्तरेऽनुभवो जन्मान्तरानुभवस्तत्सूचकं यत् स्मरणं तल्लिङ्गस्य तच्चिह्नस्य हर्षादेर्दर्शनादात्माऽनादिर्भवति। अयमर्थः। जातमात्रेऽपि प्राणिनि यद्धर्षभयशोकस्तन्याभिलाषादि चेष्टितमुपलभ्यते तदैहभविकं न भवति। तदात्वजातत्वेन तदानीमननुभवात्। किं तु पारभविकम्। तेन च पूर्वभवानुस्मरणमनुमीयते। तद्यथा। जातमात्रप्राणिनो हर्षादिस्मरणं पूर्वभवानुभवपूर्वकं स्मरणत्वात् संप्रतिपन्नस्मरणवदिति। यथा चेह भवे प्रागभवानुभूतं हर्षादि स्मर्यते। तथा पूर्वपूर्व्वभवे

पूर्व्वपूर्व्वभवानुभूतमित्यनन्तभवपारम्पर्य्येणात्मनो व्यक्तमनादित्वं सिद्ध्यति। अन्यत्राप्युक्तम्।

तदहर्जस्तनेहातो रक्षोदृष्टेर्भयस्मृतेः।
भूतानन्वयनात्सिद्धः प्रकृतिज्ञः सनातनः॥

प्रयोगस्त्वेवम्। आत्मानादिः पूर्वानुभूतसूचकस्मरणलिङ्ग-हर्षभयशोकादिमत्त्वात्। न य एवं न स एवं यथा घट इति व्यतिरेकी॥ ११८॥

एवमनादित्वं प्रसाध्य व्यापकत्वं प्रसाधयति।

धर्मादेराश्रयसंयोगापेक्षस्य गुरुत्वादिवदाश्रयान्तरे वाय्वादौ क्रियाकर्त्तृत्वदर्शनादणिमाद्युपेतस्य युगपदसंख्यातशरीराधिष्ठातृ-त्वाच्चात्मनो व्यापकत्वसिद्धिः॥

भवतीति सम्बन्धः। धर्मादेरिति। शुभहेतुर्द्धर्म्मः आदिशब्दाद-शुभहेतोरधर्म्मस्य ग्रहः। आश्रयेत्यादि। आश्रयो निजाधार आत्मा तत्संयोगमपेक्षते यः स तथा तस्य। इदं धर्मादेर्विशेषणम्। गुरुत्वादि-वदिति दृष्टान्तः। अत्रादिशब्दाद्द्रवत्वादिग्रहः। आश्रयान्तर इति। धर्माधर्मयोराश्रयः क्षेत्रज्ञः तस्मादन्यत्राश्रये। इदं वाय्वादावित्यस्य विशेषणम्। वाय्वादावित्यत्रादिशब्दादग्निग्रहः। अणिमादी-त्यादि। अणिम-महिम-लघिम-यत्र कामावसायित्वेशित्व-वशित्व-प्राप्ति प्राकाम्यरूपमणिमाद्यष्टकम्। तदुपेतस्य प्रकरणापन्नत्वादा-त्मनः। अयमर्थः। वातः सर्वदा वाति ज्वलनश्चोर्द्ध्वं ज्वलति। तयो-र्वातोर्द्ध्वज्वलनक्रिया क्रियात्वादवश्यं सहेतुका। हेतुश्च धर्माधर्मावे-वान्यासम्भवात्। तथाच प्रयोगः। वाय्वादिक्रिया धर्माधर्म्मजनिता

क्रियात्वात्संप्रतिपन्नक्रियावदिति। धर्माधर्मौ च निजाश्रयादन्यत्र वाय्वादौ गुणत्वाद्गुरुत्वादिवन्निजाश्रयसंयुक्तावेव क्रियां कुर्वीयातां नान्यथा। यथा गुरुत्वं द्रवत्वं वा स्वाश्रयसंयुक्तमेवाश्रयान्तरे पतनादिक्रियां करोति तथा। प्रयोगश्चात्र धर्मादिः स्वाश्रयसंयोगापेक्ष एव वाय्वादिक्रियाजनको गुणत्वाद्गुरुत्वादिवत्। धर्माधर्मौ त्वात्मनो गुणौ। गुणौ च गुणिनं विहाय न क्वापि तिष्ठतः। ततः सार्वत्रिक्या वाय्वादिक्रियाया धर्माधर्मापेक्षित्वे धर्माधर्मयोश्च स्वाश्रयसंयुक्तयोरेव क्रियाकर्तृत्वान्निजाश्रयस्यात्मनोऽपेक्षितयात्मा व्यापकः सिद्ध्यति। तथाचार्थापत्तिः। आत्मा व्यापकः सर्वत्र वाय्वादिक्रियाजनकधर्माधर्मसद्भावान्यथानुपपत्तेरिति। तथायमात्माष्टाङ्गयोगजुष्टपुण्यनैपुण्यवशात्प्राप्ताणिमादिसिद्ध्यष्टको ह्यायुषि स्तोके सति भोग्यभूरिकर्मनिर्मूलनाय युगपदसंख्यानि शरीराण्यधितिष्ठति। तच्च युगपद्बहुशरीराधिष्ठानं व्योमवद्व्यापकत्वं विना नोपपद्यते। ततो युगपदसंख्यातदेहाधिष्ठानादप्यात्मा व्यापको भवति। अत्रापि प्रयोगः। आत्मा व्यापको युगपदसंख्यातशरीराधिष्ठातृत्वात् व्योमवदिति। सिद्धः चेतनो व्यापकः॥ १२०॥

अणिमादिसिद्ध्यष्टकजुष्टस्य चेतनस्य युगपद्बहुदेहाधिष्ठातृत्वे पुराणोक्तिं च दर्शयति।

तथाचोक्तम्। पुराणादिषु।

आत्मनो वै शरीराणि बहूनि मनुजेश्वर।
प्राप्य योगबलं कुर्य्यात्तैश्च सर्वां महीं चरेत्॥ १॥

भुञ्जीत विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत् ।

संहरेच्च पुनस्तानि सूर्य्यस्तेजोगणानिव ॥ इति

यदा चैतज्ज्ञस्य पुरुषायुषात्कर्म्माण्यधिकानि भवन्ति । तदा विशिष्टाङ्गयोगबलेन युगपद्बहूनि शरीराणि सृष्ट्वा तैश्च कैश्चिद्भोगान् भुक्त्वा कैश्चित्तपस्तप्त्वा च प्रक्षीणेषु सर्वकर्मसु तानि पुनरात्मा संहरति । यथा सूर्य्यः स्वतेजांसि प्रसार्य्य पुनः संहरति । तथेत्यर्थः ॥ १२१ ॥

उपसंहरति ।

तदेवमपरात्मतत्त्वज्ञानपरलोकसद्भावेन परलोके प्रवृत्त्युपयोगित्वादधर्मक्षयहेतुत्वाच्च निःश्रेयसाङ्गमितीति ॥

तदेवं पूर्वोक्तयुक्त्या व्यवस्थापितमपरमात्मनो जीवस्य तत्त्वज्ञानं यथावस्थितस्वरूपाववोधः । स्वर्गापवर्गरूपपरलोकास्तित्वेन परलोके स्वर्गादिविषये तपःसंयमनियमोपासनलक्षणप्रवृत्त्युपकारित्वात् । अधर्मः पापं तत्क्षयहेतुत्वाच्च निःश्रेयसस्य मोक्षस्योपायो भवति । परलोकसद्भावेनेति पदं परलोकार्थतपःसंयमादिप्रवृत्तिनिमित्तार्थम् । यदि प्राक् परलोकोऽस्तीति न प्रतिपद्येत तर्हि तपस्याप्रवृत्तिभिः कष्टैः कः स्वञ्चिक्लिश्येतात्मतत्त्वज्ञाने स्फुरिते स्वर्गादिपरलोके स्वीकृते तपःसंयमादिना पाप्मनि प्रलीने मोक्षो भवतीत्यर्थः ॥ १२२ ॥

अथ परमात्मज्ञानस्य मोक्षाङ्गत्वं लक्षयति ।

परमात्मज्ञानं च तदुपासनाङ्गत्वेनापवर्गसाधनमितीति ॥

तस्य परमात्मन उपासनाङ्गमाराधनोपायस्तद्भावेन परमात्म-

साधनं ज्ञानं मोक्षसाधनं भवति। परमात्मानं सम्यग्विज्ञायोपास्य च संसारी मुच्यत इति भावः॥ १२३॥

उपासनस्वरूपं निरूपयति।

स चोपासनविधिः। क्लेशक्षयसमाधिलाभार्थमनुष्ठानमिति॥

क्लेशा रागद्वेषमोहाभिनिवेशास्तत्क्षयाय यः समाधिः परमात्मनि चित्तैकतानता तत्प्राप्त्यर्थं यदनुष्ठानं तपःस्वाध्यायादि विधेयम्। तदुपासनविधिर्भवति। एतेन यत् क्लेशविनाशकसमाधिसिद्ध्यर्थं न भवति तत्कष्टमात्रमित्युक्तम्॥ १२४॥

अत्राध्यात्मशास्त्रसम्मतिं दर्शयति।

तथाचोक्तम्। तपःस्वाध्यायेश्वरप्रणिधानात्मिका क्रिया योगः। क्लेशतनूकरणार्थः समाधिलाभार्थश्चेति॥

तपःप्रभृतीनि वक्ष्यमाणलक्षणानि। तदात्मिका क्रिया कायवाङ्मनोव्यापारः। सा योगहेतुत्वाद्योग इत्युच्यते। स च रागद्वेषमोहरूपक्लेशलाघवाय चित्तैकतानतात्मकसमाधिसिद्ध्यै च भवति। तपःप्रभृतिभिः क्लेशांस्तनूकृत्य समाधिमाप्नुते इत्यर्थः॥ १२५॥

तपो लक्षयति।

तत्रोन्मादकामादिव्यपोहार्थमाध्यात्मिकादिदुःखसहिष्णुत्वं तप इति॥

कामादीत्यत्रादिशब्दात् क्रोधादिपरिग्रहः। आध्यात्मिकादीत्यादि। दुःखं त्रिधाध्यात्मिकाधिभौतिकाधिदैविकभेदात्। तत्रात्मानमधिकृत्य जातमाध्यात्मिकं व्याध्यादि। भूतान्यधिकृत्य

जातमाधिभौतिकं मानवपश्वादिभूतजनितप्रहारादि। दैवमधिकृत्य जातमाधिदैविकं शीतवातातपादि। स्वेच्छया तत्त्रिविधदुःखसहिष्णुत्वं चान्द्रायणादिरूपं तप इत्युच्यते ॥ १२६ ॥

स्वाध्यायं निरूपयति।

प्रशान्तमन्त्रस्येश्वरवाचिनोऽभ्यासः स्वाध्याय इति ॥

पौनःपुन्येन परिशीलनमभ्यासः। कार्मणादिक्षुद्रकर्मकररौद्रमन्त्रनिवारणार्थं प्रशान्तेत्युक्तम्। शेषं स्पष्टम् ॥ १२७ ॥

ईश्वरप्रणिधानं बोधयति।

परमेश्वरतत्त्वस्य प्रबन्धेनानुचिन्तनमीश्वरप्रणिधानमिति ॥

परमेश्वरतत्त्वस्य परमात्मस्वरूपस्य प्रबन्धेन नैरन्तर्य्येण यदनुचिन्तनं पर्य्यालोचनं तदीश्वरप्रणिधानं शिवध्यानं भवति ॥ १२८ ॥

पूर्वं तपःप्रभृतिको योगः क्लेशतनूकरणार्थो भवतीत्युक्तमासीदतः क्लेशानाह।

समासतो रागद्वेषमोहाः क्लेशाः समाधिप्रत्यनीकाः। संसारापत्तिद्वारेण क्लेशहेतुत्वादिति ॥

समासत इति। यद्यपि व्यासाद्बहवस्तथापि सङ्क्षेपात् क्लेशा रागाद्यास्त्रय एव। क्लेशानां त्रित्वप्रतिपादनेन तत्प्रत्युक्तम्। यदुक्तं सांख्यैः सांख्यसप्तत्याम्।

पञ्चविपर्य्ययभेदा दशधा शक्तिश्च करणवैकल्यात्।

अष्टाविंशतिभेदा तुष्टिर्नवधाष्टधासिद्धिरिति ॥

कारिकायाम्। अविद्यास्मितारागद्वेषाभिनिवेशा यथासंख्यं तमोमहामोहमोहतामिस्रान्धतामिस्रसंज्ञाः पञ्चविपर्य्ययाः क्लेशा-

परनामान इति। आप्तोक्तार्थविपरीतज्ञानमविद्या। पुरुष-बुद्ध्योरेकात्मतैवास्मिता। स्वरसवाही विदुषोऽपि तथा रूढ़ः कदाग्रहोऽभिनिवेश इति। स्वरूपाणामविद्यास्मिताभिनिवेशानां मोहस्वभावत्वात्। रागेत्यादि। प्रीत्यात्मको रागः। अप्रीत्यात्मको द्वेषः। विपर्य्यस्तज्ञानं मोहः। समाधिप्रत्यनीका इति पर-ब्रह्मणि चित्तैकतानत्वविनाशकाः। रागादीनां प्रीत्याद्यात्मकत्वात् कथं क्लेशत्वमित्याह संसारेत्यादि। भवप्राप्त्युपायेन। अयमर्थः। यद्यपि रागादयो मुख्यवृत्त्या क्लेशशब्दवाच्या न भवन्ति तथापि समाधिप्रतिकूलत्वेन दुःखभारापारसंसारकारणत्वात् क्लेशा भवन्ति ॥ १२९ ॥

यथा तपःप्रभृतयः क्लेशविनाशकास्तथाष्टाङ्गोऽपि भवतीति तदङ्गाष्टकमाचष्टे।

तथा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो-ऽष्टावङ्गानीति ॥

यमादीनां लक्षणं प्रत्येकं स्वयमेव वक्ष्यति। अष्टावङ्गानीत्यत्र योगस्येति शेषः ॥ १३० ॥

तत्रादौ यमांल्लक्षयति।

*तत्र देशकालावस्थाभिरनियताः पुरुषस्य शुद्धिवृद्धिहेतवो यमा अहिंसाब्रह्मचर्य्यास्तेयादय इति ॥

---

* The reading adopted by the commentator here differs some-what from the text ( See page 38 Line 11-12 ).

तत्रेति निर्द्धारणे। अवस्थेति बालत्वादिलक्षणा। अनियता इति असङ्कोचिताः। शुद्धिः कल्मषक्षयः। वृद्धिः पुण्योपचयः। यमा इति यम्यते बाध्यतेऽनर्गलं चलचित्तमेभिरिति यमाः। अस्तेयादय इत्यत्रादिशब्दात्सत्यादिपरिग्रहः। अयमर्थः। देशादिभिरनियताः सर्वस्मिन् देशे सर्वस्मिन् काले सर्वस्यां बाल्याद्यवस्थायां न हिंसिष्यामि, ब्रह्म चरिष्यामि, न चोरयिष्यामि, नासत्यं वक्ष्यामि, न परिग्रहीष्यामि इति स्वरूपाः पापापचायकाः पुण्योपचायकाश्चाहिंसाब्रह्मचर्य्यास्तेयसत्यापरिग्रहा यमा भवन्ति। अहिंसासूनृतास्तेयब्रह्माकिञ्चनता यमा इति वचनात्। देशकालावस्थाभिरनियता इति पदं नियमेष्वतिव्याप्तिनिषेधार्थम् ॥ १३१ ॥

नियमानभिधत्ते।

देशकालावस्थापेक्षिणः पुण्यहेतवः क्रियाविशेषा नियमा देवताप्रदक्षिणसन्ध्योपासनजपादय इति ॥

नियम्यते चित्तमेभिरिति नियमाः। देशकालावस्थापेक्षिण इति पदं यमेष्वतिव्याप्तिव्यवच्छेदार्थम्। तत्र देशापेक्षि देवताप्रदक्षिणं दक्षिणे भ्रान्त्वा वामदिग्गमनात्। कालापेक्षि सन्ध्योपासनं प्रातर्मध्याह्नसायंकालेषु सन्ध्योपासनात्। अवस्थापेक्षी जपः परिणतावस्थायां जपानुष्ठानात्। जपादय इत्यत्रादिशब्दात्तपःप्रभृतयोऽन्येऽपि व्रतविशेषा ग्राह्याः। ततो देशाद्यपेक्षिणः पुण्यप्रवर्त्तका देवताप्रदक्षिणादयः क्रियाविशेषा नियमा भवन्ति ॥ १३२ ॥

आसनं लक्षयति।

योगकर्मविरोधिक्लेशजयार्थः करणबन्ध आसनं पद्मकस्वस्तिकादीति॥

अस्यतेऽनेनेत्यासनम्। योगकर्माष्टाङ्गक्रिया तद्विरोधिनो ये क्लेशा अर्थात् क्लेशावहा व्याध्यादयस्तज्जयनिमित्तं करणानां शरीरावयवानां करचरणादीनां बन्धः संयमनमासनं भवति। तच्च पद्मकस्वस्तिकादिकम्। आदिशब्दाद्वीरवज्रासनादिग्रहः। पद्मकादीनां लक्षणं शास्त्रान्तरात् ज्ञेयम्। अत्र ग्रन्थगौरवभयान्नोच्यते॥ १२३॥

प्राणायामं ज्ञापयति।

कौष्ठस्य वायोर्गतिविच्छेदः प्राणायामो रेचकपूरककुम्भकप्रकार इति॥

प्राणस्यायमः प्राणायामः। कोष्ठे भवः कौष्ठस्तस्य वायोः श्वासप्रश्वासरूपस्य योगविच्छेदः प्रचाररोधः। स प्राणायामो भवति। स च रेचकपूरककुम्भकभेदात्त्रेधा। तत्र शरीरस्थ वायोर्बहिर्विरेचनाद्रेचकः। बाह्यस्य वायोः शरीरान्तःपूरणात् पूरकः। पूरितस्य वायोर्देहान्तर्निश्चलीकरणात् कुम्भकः। तदुक्तम्। श्रीयोगशास्त्रे।

प्राणायामो गतिच्छेदः श्वासप्रश्वासयोर्मतः।
रेचकः पूरकश्चैव कुम्भकश्चेति स त्रिधा॥ १॥
यत्कोष्ठादतियत्नेन नासाब्रह्मपुराननैः।
बहिःप्रक्षेपणं वायोः स रेचक इति स्मृतः॥ २॥

समाकृष्य यदापानात् पूरणं स तु पूरकः ।

नाभिपद्मे स्थिरीकृत्याराधनं स तु कुम्भकः ॥ ३ ॥ १३४ ॥

अथ वायुजयोपायमाह ।

स च शनैःशनैर्जेतव्यो वनगजेन्द्रवदिति ॥

स त्रिप्रकारोऽपि वायुर्मन्दं मन्दं वशं नेयो यथा वनगजेन्द्रः । मत्तो हि वनगजः शनैःशनैर्जीयमानोऽत्यन्तमुपकुरुते बलाच्च विकुरुते । एवं वायुरपीत्यर्थः ॥ १३५ ॥

प्रत्याहारस्वरूपं प्ररूपयति ।

समाधिप्रत्यनीकार्थेभ्यः समन्ताच्चेतसो व्यावर्त्तनं प्रत्याहार इति ॥

प्रतीपमाहरणं विषयेभ्य इन्द्रियाणां प्रत्याहारः । समाधिः परमब्रह्मणि चेतःस्थेमा तस्य प्रत्यनीकाः प्रतिकूला येऽर्था विषयादयस्तेभ्यः सर्वथा यच्चित्तस्य व्यावर्त्तनमिन्द्रियनिवृत्तेश्चित्तनिवृत्त्यधीनत्वात् । स प्रत्याहारो भवति । प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिरिति वचनात् ॥ १३६ ॥

धारणां लक्षयति ।

चित्तस्य देशसम्बन्धो धारणेति ॥

धारणं धारणा । देशे हृत्प्रदेशे परमात्मनि वा चित्तस्य यः सम्बन्धः तन्निष्ठता सा धारणा भवति ॥ १३७ ॥

ध्यानमभिधत्ते ।

*तत्र प्रत्ययैकतानता ध्यानमिति ॥

ध्यायते ध्यानम्। तत्र परमात्मादौ ध्येये हृत्प्रदेशे वा। प्रत्ययस्य ध्येयालम्बनस्य एकतानता प्रत्ययान्तरेणापरामृष्टस्तुल्यः प्रवाहो ध्यानं भवति। ध्यानन्तु विषये तस्मिन्नेकप्रत्ययसन्ततिरिति भणनात्॥ १३८॥

समाधिस्वरूपं बोधयति।

तदेवार्थनिर्भासमात्रं स्वरूपशून्यमिव समाधिरिति ॥

सम्यगाधीयत इति समाधिः। तदेव ध्यानमेव। अर्थनिर्भासमात्रं ध्येयाकारमात्रावलम्बनमिदं ध्येयमहं ध्यायामीति मिथो भेदप्रत्ययात्मकेन स्वरूपेण शून्यमिव रहितमिव समाधिर्भवति। निखिलं विकल्पजालमुन्मूल्य यत्र चेतः परब्रह्मणि निलीयते स समाधिरित्यर्थः। निरस्तसमस्तविकल्पजालं परमानन्दलीनं च चित्तं योगमार्गे सुलीनमित्युच्यते। तदुक्तं श्रीयोगशास्त्रे

इह विक्षिप्तं यातायातं श्लिष्टं तथा सुलीनञ्च।
चेतश्चतुःप्रकारन्तच्च चमत्कारकारि भवेत्॥
विक्षिप्तञ्चलमिष्टं यातायातञ्च किमपि सानन्दम्।
प्रथमाभ्यासे द्वयमपि विकल्पविषयग्रहं तत् स्यात्॥
श्लिष्टं स्थिरमानन्दं सुलीनमिति निश्चलं परानन्दम्।
तन्मात्रकविषयग्रहमुभयमपि बुधैस्तदाम्नातमिति ॥१३९॥

---

* The Text reads 'तत्रैकतानता ध्यानमिति' ( See page 39, Line 3 ).

समाधिस्वरूपं स्वयमेव किञ्चिद्विवृणोति।

ध्यानोत्कर्षान्निर्वाताचलप्रदीपावस्थानमिवैकत्वैव चेतसोऽवस्थानं समाधिरभिधीयते इति॥

यथा निर्वातेनाचलस्य प्रदीपस्यावस्थानं स्थिरं भवति। तथात्यन्तध्यानाभ्यासवशादेकत्वैव ध्येय एव चित्तस्य यत् स्थिरमवस्थानं तत्समाधिरुच्यत इत्यर्थः॥ १४०॥

उपसंहरति।

एवमेतानि योगाङ्गानि सर्वेषु ब्रह्मादिषु स्थानेष्वनेकप्रकारदुःखभावनयानभिरतिसंज्ञितं परं वैराग्यं महेश्वरे च परां भक्तिमाश्रित्यात्यन्ताभियोगेन मुमुक्षुणा सेवितव्यानीति॥

एतानीति पूर्वोक्तानि। मुमुक्षुणेति मोक्षकामेन। अनभिरतीति अनपेक्षारूपम्। परमिति सर्वकालीनम्। शेषं व्यक्तम्। अयमर्थः। समग्रमपि जगदुग्रदुःखार्त्तमिति वासनया सर्वत्राप्य रतिरूपं गाढं वैराग्यमारुह्य परमात्मनि परां भक्तिं च धृत्वा मोक्षमाणेन पुंसाष्टावपि योगाङ्गान्युपास्यानि॥ १४१॥

योगाङ्गसेवाफलमाह।

ततोऽचिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति। तं दृष्ट्वा निरत्ययं श्रेयः प्राप्नोतीति॥

तत इति। अष्टाङ्गयोगसेवातः। अनौपम्येति। उपमैवोपम्यं जगद्विलक्षणत्वादनौपम्य उपमारहितः स्वभावो यस्य स तथा तम्। लोकोत्तरस्वरूपमित्यर्थः। अवितथमिति सत्यम्। वितथत्वहेतुरागादिदोषादूषितत्वात्। निरतिशयमिति। निश्चितानुभावं

तारतम्यरहितं वा। अष्टाङ्गयोगवैशिष्ट्यात् सर्वोत्कृष्टगुणविशिष्टं शिवं साक्षात्कृत्य निःश्रेयसमाश्रीयत इत्यर्थः ॥ १४२ ॥

अथ शिववीक्षणादेव मोक्षो भवतीत्याख्याति ।

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।

तदा *शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

तमेव विदित्वातिमृत्युमेति इत्यादि च ॥

अविज्ञायेत्यस्याग्रे वर्त्तमानपुरुषस्येत्यध्याहार्य्यमन्यथैककर्त्तृकत्वाभावात् क्त्वाप्रत्ययस्यासम्भवः स्यात् । दुःखस्यान्त इति मोक्षः । तमेवेति शिवम् । अतिमृत्युमिति । अतिक्रान्तो मृत्युर्यत्र सोऽतिमृत्युर्मोक्षस्तम् । शिवदर्शनादेव मोक्ष इत्यत्र तमेव विदित्वेत्यादिरागमः प्रमाणमुक्तम् । शेषं स्पष्टम् ।

अयं भावः । यथाकाशस्य चर्मवद्वेष्टनं दुर्घटम् । तथा शिवमविज्ञाय मानवानां मोक्षोऽपि दुर्घट इति । अत्र व्योमदृष्टान्तो व्यतिरेकेण विज्ञेयः ।

ननु शिवदर्शनादेव मुक्तिश्चेत्तर्हि तपःक्लेशादिसहनं व्यर्थमिति चेन्न । तपःक्लेशादीनां पापक्षयहेतुत्वात् । क्षीणपाप्मनां च शिवदर्शनात् ॥ १४३ ॥

उपसंहरति ।

तस्माच्छिवदर्शनादेव मोक्ष इति ॥

---

* The reading "शिवमयं ज्ञात्वा" is mentioned in the foot note of Page 39.

एवकारोऽन्ययोगव्यवच्छेदार्थः ॥ १४४ ॥

अथ मोक्षविप्रतिपत्तिनिराचिकीर्षया प्रश्नमुत्थापयति ।

कः पुनरयं मोक्ष इति ॥

क इति । कीदृक् स्वरूपः । अयमिति । इदमा निर्देशः प्राक् प्रत्यासन्नभणनात् । अन्यथा तस्य परोक्षत्वात् तन्निर्देशो ऽनुचितः स्यादिति ॥ १४५ ॥

निराचिकीर्षयौलूक्यमोक्षस्वरूपं दर्शयति ।

एके तावद्वर्णयन्ति । समस्तविशेषगुणोच्छेदे संहारावस्थाया-माकाशवदात्मनोऽत्यन्तावस्थानं मोक्ष इति ॥

एके इति औलूक्याः । समस्तविशेषगुणोच्छेदे इति । समस्ताश्च ते विशेषगुणाश्च समस्तविशेषगुणा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्मा-धर्म्मसंस्काररूपा नवसंख्यकास्तेषामुच्छेदः सर्वथा प्रलयस्तस्मिन् । संसारावस्थायामिति प्रलयावस्थायाम् । आकाशवदिति आकाश-स्येव । अत्यन्तावस्थानमिति सार्वदिकी स्थितिः । प्रलयकालीना-त्मावस्थितिव्यपोहार्थमत्यन्तावस्थानमित्युक्तम् । अयमर्थः । वैशे-षिकाणां मते चतुर्द्दशगुणाधिकरण आत्मा । तत्र चतुर्द्दशानां गुणानां मध्ये पञ्च गुणाः सामान्या बुद्ध्यादयो नव विशिष्टाः । यर्हि बुद्ध्यादयो नव विशिष्टा गुणाः समुच्छिद्यन्ते तदा शिला-शकलकल्पस्यात्मनोऽत्यन्तावस्थानं मोक्षो भवति । यथा प्रलयकाले विशिष्टगुणशब्दोच्छेदात् केवलस्याकाशस्यावस्थानं भवति तथे-त्यर्थः । तथाचानुमानं नवानामात्मविशेषगुणानां सन्तानोऽत्यन्त-मुच्छिद्यते सन्तानत्वात् प्रदीपसन्तानवदिति । तथागमोऽपि ।

न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत इत्यादि। अत्र प्रियाप्रियशब्देन सुखदुःखे। नहवैशब्दो निषेधार्थे। वाशब्द एवार्थे।

तदेवं धिषणादीनां नवानामपि मूलतः।

गुणानामात्मनो ध्वंसः सोऽपवर्गः प्रकीर्त्तितः॥

तस्याञ्चावस्थायाम्।

स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः।

ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः॥

ऊर्मयस्तु कामक्रोधमदगर्वलोभदम्भा इति॥ १४६॥

सुखस्याप्युच्छेदः कुतोऽभिमत इति शिष्यः संपृच्छते।

कस्मादिति॥

प्रेक्षावत्प्रवृत्तेः सुखमूलत्वात् सुखोच्छेदोऽनुचित इति भावः॥ १४७॥

प्रत्युत्तरयति।

सुखदुःखयोरविनाभावित्वेन विवेकहानानुपपत्तेरिति॥

अत्र सुखदुःखशब्दावुपचारात् सुखदुःखहेतुवाचकौ। तयोश्चाविनाभावित्वात् सुखहेतूनां सद्भावेऽवश्यंभावेन दुःखहेतुसद्भावाद्विवेकहानम्। सुखमाहृत्य दुःखत्यागस्याघटनात्। अयमर्थः। सांसारिकमङ्गनाङ्गपरिषङ्गादि यत्सुखं तत्सर्वं दुःखानुषक्तम्। ततः सुखेऽनुभूते विषसंपृक्तमधुवद्दुःखं दुस्त्यजम्। सुखहेतूनामवश्यं दुःखजनकत्वेनाविनाभूतत्वात्। तथाहि सुखं दुःखानु-

षक्तं तदविनाभूतत्वात्। धूमवह्निवदिति। तथा सुखानुभवे दुःख दुस्त्यजं मिथः सम्बद्धत्वात् विषसंपृक्तमधुवदिति ॥ १४८ ॥

आत्यन्तिकबुद्ध्याद्युच्छेदात् शिलाशकलकल्पे मोक्षे प्रेक्षावन्तो न प्रवर्त्स्यन्तीत्याशङ्क्याह।

न च सुखार्थैव प्रेक्षावतां प्रवृत्तिः। कण्टकादिदुःखपरिहारार्थत्वेनापि प्रवृत्तेरुपलम्भादिति ॥

प्रेक्षावन्तो बुद्धिमन्तस्ते सुखार्थमेव प्रवर्त्तन्त इति न। किं तु दुःखत्यागायापि प्रवर्त्तन्ते। ते ह्येवं विवक्षते। दुःखस्पर्शशून्यशश्वत्सुखाभावात् दुःखस्य चावश्यहातव्यत्वात् विवेकहीनस्य च दुःशकत्वात् विषसंपृक्तमधुवदुभे अपि सुखदुःखे त्यज्येयातामतो भवन्मोक्षः श्रेष्ठोऽत्र नैतावान् दुःखविप्लव इति। ततः सुखप्राप्त्यर्थमिव दुःखत्यागार्थमपि प्रेक्षावत्प्रवृत्तेरुपलम्भोऽस्ति। तथाच प्रयोगः। प्रेक्षावतां प्रवृत्तिर्दुःखपरिहारार्थापि प्रवृत्तित्वात् कण्टकोद्धारप्रवृत्तिवदिति। ततोऽत्यन्तदुःखोच्छेदायैतादृशेऽपि मोक्षे दक्षाः प्रवर्त्तिष्यन्त इत्यर्थः ॥ १४९ ॥

अथ स्वमोक्षं प्रमाणयितुमौलूक्यमोक्षमधिक्षिपति।

मोहावस्थात्वान्मूर्च्छाद्यवस्थावदत्र विवेकिनां प्रवृत्तिर्न युक्तेत्याहुरन्य इति ॥

अन्ये इति काणादापेक्षया नैयायिकनायका एवं प्राहुः। यदत्र पराभिमते मोक्षे विवेकिनां प्रेक्षावतां प्रवृत्तिर्युक्ता न भवति। मोहावस्थात्वात् शून्यावस्थाभावादित्यर्थः। यथा मूर्च्छा गुरुतरगरोर्मिनिर्मिता घूर्णा। आदिशब्दात् क्लैब्यादिग्रहः। तत्र

मूर्च्छाद्यवस्थायां न कोऽपि प्रवर्त्तते तथा। अयं भावः। भवदभिमतो मोक्षो मोहावस्थामनुकरोति। सर्वथा बुद्धिसुखयो-रुच्छेदाहरणात्। ततो यथाहं मूर्च्छाद्यवस्थायां भूयासमिति मनीषया कश्चिदपि प्रेक्षावान् मूर्च्छाद्यवस्थायां न प्रवर्त्तते। तथा भवदुक्ते मोक्षे न कोऽपि प्रवर्त्स्यति। चैतन्यशून्यत्वेन द्वयोस्तुल्यत्वादन्यथा प्रेक्षावत्ताक्षतेः। तथा चानुमानम्। विवादा-ध्यासिते मोक्षे प्रेक्षावन्तो न प्रवर्त्स्यन्ति। मोहावस्थात्वात् मूर्च्छाद्यवस्थावदिति ॥ १५० ॥

कण्टकोद्धारवदिति परोक्तदृष्टान्तस्य वैषम्यं स्पष्टयितुमाचष्टे।

दुःखे सति सुखोपभोगस्यासम्भवात् कण्टकादिदुःखपरि-हारोऽपि सुखोपभोगार्थ एवेत्यसमो दृष्टान्त इति ॥

सुखाभावेऽपि कण्टकादिदुःखपरिहाराय प्रेक्षावान् प्रवर्त्तत इति यः परोक्तो दृष्टान्तः। सोऽसमो विषमो दुःखे सत्यवश्यं सुखोपभोगाभावात्। अतएव दुःखपरिहारेऽपि या प्रवृत्तिः सा सुखप्राप्त्यर्थैव। अयमर्थः। कण्टकादिभङ्गदुःखे सुखं तावन्न भवति। सुखदुःखयोर्मिथो विरोधव्याप्यव्यापकत्वात्। ततो यदा तद्दुःखपरिहाराय प्रेक्षावान् प्रवर्त्तते तदा तदपहारे किञ्चित्सुखमस्ति न वा। नास्तीति तावद्वक्तुमशक्यं सुखानुभूत्या प्रतीतिविरोधापत्तेः। अस्तीति चेत्कथं दुःखपरिहारार्थैव प्रवृत्ति-र्न सुखार्था। तथाच प्रयोगः। प्रेक्षावत्प्रवृत्तिर्दुःखपरिहारार्थापि सुखार्थैव प्रेक्षावत्प्रवृत्तित्वाद्विचलितरक्तनिष्काशनप्रवृत्तिवदिति।

ननु कण्टकभङ्गप्रागवस्थाया एव कण्टकोद्धारे व्यज्यमान-

त्वात् कुतः सुखमिति चेन्न। सा प्रागवस्था किं सुखमयी दुःखमयी वा। प्रकारान्तराभावात्। न तावद्दुःखमयी दुःखहेतुकण्टकादि शल्यस्यासत्त्वात्। सुखमयी चेत्तर्हि सुखार्थैव प्रवृत्तिरित्यायातम्॥ १५१॥

परमाशङ्कते।

कुतो मुक्तस्य सुखोपभोगसिद्धिरिति चेदिति॥

चेदिति। कुतः प्रमाणादिति प्रश्नार्थः॥ १५२॥

आगमादुक्तं हि।

सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम्।
तं वै मोक्षं विजानीयात् दुष्प्रापमकृतात्मभिः॥

तथा आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते। विज्ञानमानन्दं ब्रह्मेति॥

आत्यन्तिकमिति अतिशायि। बुद्धिग्राह्यमिति ज्ञानवेद्यमतीन्द्रियमिति आत्मप्रत्यक्षम्। एभिस्त्रिभिर्विशेषणैः सांसारिकदुःखव्युदासस्तस्य नैतद्रूपत्वात्। अकृतात्मभिरिति। अपरिकर्मितक्षेत्रज्ञतत्त्वैः। कोऽर्थः। अनिन्द्रियप्रभवत्वादतिशाश्वतं विशिष्टज्ञानसंवेद्यं क्षेत्रज्ञप्रत्यक्षं सौख्यं यत्र साक्षाद्भवति तम्। अनात्मतत्त्वज्ञैरतिदुर्लभं मोक्षं विद्वान् विद्यादिति। तथानन्दमित्यादि। आनन्दमिति व्युत्पत्त्या सर्वदाप्यानन्दकं ब्रह्मणः परमात्मनो रूपं स्वरूपं तच्च मोक्षेऽभिव्यक्तमिति। विज्ञानं विशिष्टज्ञानजुष्टमानन्दमाह्लादकम्। ब्रह्म परमात्मस्वरूपञ्चापि मोक्षेऽभिव्यज्यते। एवं मुक्तस्य सौख्यसद्भावे आगमप्रमाणमुक्तम्।

ननु नवानां विशिष्टगुणानां सन्तानोऽत्यन्तमुच्छिद्यते सन्तानत्वात् प्रदीपसन्तानवदिति प्रागुक्तेनानुमानेनायमागमो बाधिष्यत इति चेन्न। विकल्पाक्षमत्वात्। तथाहि किमिदं सन्तानत्वं नाम। किं कार्य्यकारणभावेन प्रवृत्तिरेकाधारापरापरोत्पत्तिर्वा। नाद्यः पक्षस्तादृक्षसन्तानस्य भवतामनभ्युपगमात्। यैस्तु बौद्धैस्तादृशः सन्तानोऽभ्युपगम्यते तेषां मतेऽपि कार्य्यकारणभावेन प्रवर्त्तमानानां बुद्ध्यादिक्षणानां मुक्तावपि निर्मलतया पुनरुत्पादेन सर्वथा सन्तानानुच्छेदात्। न द्वितीयः। प्रदीपादौ तादृक् सन्तानत्वाभावेन दृष्टान्तस्य साधनवैकल्यापातात्। तथाविधसन्तानत्वसद्भावेऽपि चात्यन्तोच्छेदाभावात् परमाणुपाकजरूपादिभिर्हेतुर्व्यभिचारी। शब्दबुद्धिविद्युदादिष्वत्यन्तानुच्छेदवत्सन्तानत्वस्य स्थितत्वाद्विरुद्धः। सन्तानोऽपि स्यादत्यन्तं नोच्छिद्येत च विपर्य्यये बाधकाभावादित्यनैकान्तिकोऽपीत्यलं प्रसङ्गेन॥ १५२॥

मुक्तस्य दुःखाभावे सुखानन्दशब्दावौपचारिकावित्याशङ्क्य परिहरति।

मुख्यार्थे बाधकाभावान्नोपचारकल्पनेति॥

मोक्षे सुखानन्दशब्दयोरुपचारकल्पना गौणी वृत्तिर्न भवति। अत्र हेतुः। मुख्यार्थे स्वस्वाभिधाव्यापारवाच्ये सुखाह्लादरूपे बाधकप्रमाणाभावात्। अयमर्थः। शब्दप्रवृत्तिर्द्विधा मुख्यवृत्त्योपचारवृत्त्या च। यत्र मुख्यार्थबाधस्तत्रौपचारिकी। यथा माणवकोऽग्निरित्यत्र माणवके दाहकत्वस्य मुख्यार्थस्य बाधात् दुर्द्धरक्रोध-

योगेनाग्निशब्द उपचारिकः। अत्र च मोक्षे माणवकेऽग्निशब्दस्येव सुखानन्दशब्दयोरौपचारिकी वृत्तिर्न भवति। सुखानन्दशब्द-वाच्यस्य सन्तोषाह्लादरूपस्य मुख्यार्थस्य बाधायोगात्। मोक्षे सुखानन्दशब्दयोः स्ववाच्यं वाचयतोर्न किञ्चिद्बाधकमिति भावः। प्रयोगश्चात्र सुखानन्दशब्दौ मोक्षे साक्षात् स्ववाच्यवाचकौ मुख्यार्थे बाधकाभावात् घटे घटशब्दवदिति ॥ १५४ ॥

परोक्तं मुख्यार्थबाधं शङ्कते।

*सुखसंवेदनयोर्नित्यत्वात् मुक्तसंसारिणोरविशेषप्रसङ्ग इति चेदिति ॥

न सुखं परमानन्दरूपं संवेदना ज्ञानम्। तयोर्नित्यत्वान्मुक्तात्मनः संसारिणश्चाविशेषः प्रसज्येत। सुखसंवेदनयोर्नित्यभावेन मुक्तस्येव संसारिणोऽपि तत्सम्भवात्। अयमर्थः। मुक्तस्य ये सुख-संवेदने ते किमनित्ये नित्ये वा। न तावदनित्ये सुखसंवेदनयो-र्विनाशेन पुनर्दुःखोत्पादान्मुक्तस्यापि संसारित्वप्रसङ्गः। नित्ये चेत्तर्हि तयोरात्मगुणत्वेन सर्वदात्मना सह सम्बन्धान्मुक्तात्मनीव संसारिण्यपि ते व्यक्तीभवतोऽन्यथा नित्यत्वनाशात्। संसारिण्यपि च तद्व्यक्तौ मुक्तस्य संसारिणश्चाविशेषः प्रसज्येत। ततः सुखानन्द-शब्दयोर्मुख्यार्थे प्रसङ्गबाधकसद्भावात् स्ववाच्ये औपचारिक्येव वृत्तिः ॥ १५५ ॥

---

* The Text adds "अन्यथा" in the beginning of this aphorism ( See page 40. Line 14 ).

परिहरति ।

न चक्षुर्घटयोः कुड्यादेरिव सुखसंवेदनयोर्विषयविषयिसम्बन्धप्रत्यनीकस्य दुःखादेः संसारावस्थायां सम्भवात् तन्नाशे च मुक्तावस्थायां भवति सुखसंवेदनयोः सम्बन्ध इत्यतो नाविशेष इति ॥

यथा चक्षुर्घटयोर्विषयविषयिसम्बन्धप्रत्यनीकस्य कुड्यादेः सम्भवान्मिथः सम्बन्धो न भवति । तथा संसारावस्थायां सुखसंवेदनयोर्विषयविषयिसम्बन्धप्रत्यनीकस्य दुःखादेः सम्भवान्मुक्तावस्थायां तन्नाशे विषयविषयिसम्बन्धप्रत्यनीकदुःखादिनाशेऽतिसुखसंवेदनयोः सम्बन्धो भवत्यतो हेतोर्मुक्तसंसारिणोरविशेषप्रसङ्गो न भवति । अयमर्थः । चक्षुर्विषयि घटो विषयः तयोरन्तरा भित्त्यादौ सम्बन्धप्रतिबन्धके सति यथा मिथः सम्बन्धो न भवत्येवं संसारे संसारिणो विषयविषयिरूपयोः सुखसंवेदनयोर्विषयविषयिसम्बन्धप्रतिकूलपापोचयवशात् दुःखादिकमुदीयते । तस्मिन् सति तत्सम्बन्धो न भवति । यदा तु चक्षुर्घटयोरपि कुड्यादिव्यपगमस्तदा यथा तत्सम्बन्धः स्यात्तथाष्टाङ्गयोगपरिपुष्टपुण्यवशात् दुःखादिनाशे जाते सुखसंवेदनयोः सम्बन्धः सम्पद्यते । दुःखादिनाशस्य सर्वथा मुक्तस्यैव नान्यस्येति त्वदुक्तो मुक्तसंसारिणोस्तौल्यप्रसङ्गो न युक्त इति ॥ १५६ ॥

पुनः परमतमाशङ्कते ।

तस्य सम्बन्धस्य कृतकत्वेन कदाचिन्नाशप्रसङ्ग इति चेदिति ॥

तस्य सुखसंवेदनयोः सम्बन्धस्य संसारावस्थायामभूत्वा मुक्तावस्थायां भवतः सतः कृतकत्वम् । यस्तु कृतकः सोऽवश्यं

नश्यतीति तत्सम्बन्धस्य कृतकत्वान्नाशः प्रसज्येत। तथाहि। सुखसंवेदनयोः सम्बन्धो विनाशी कृतकत्वात् घटवदिति। सम्बन्धस्य नाशे च मुक्तस्य पुनः संसारित्वप्रसङ्गोऽपि ज्ञेयः॥ १५७॥

परिहरति।

न प्रध्वंसेनानैकान्तादिति॥

सम्बन्धानित्यत्वसाधकस्य कृतकत्वस्य हेतोः प्रध्वंसाभावेनानैकान्तिकत्वात् त्वदुक्तो हेतुर्दुष्टो भवतीति शेषः। सादिरनन्तस्वभावः प्रध्वंसस्तस्य कृतकत्वेऽप्यनश्वरत्वात्। ततः पक्षत्रयवृत्तित्वात् कृतकत्वस्य हेतोर्व्यक्तमनैकान्तिकत्वम्॥ १५८॥

पुनः शङ्कते।

वस्तुत्वे सतीति चेदिति॥

प्रागुक्तेऽनुमाने वस्तुत्वे सति कृतकत्वादिति हेतौ सविशेषणे कृतेऽनैकान्तिकत्वं न भविष्यति। प्रध्वंसस्याभावरूपतयाऽवस्तुत्वादित्यर्थः॥ १५९॥

परिहरति।

न द्रव्यादिष्वनन्तर्भावेन तदसिद्धत्वादिति॥

द्रव्यादिषु द्रव्यगुणकर्म्मसामान्यविशेषसमवायेष्वनन्तर्भावेनाप्रवेशेनास्य वस्तुत्वस्यासिद्धत्वादित्यनैकान्तिकत्वपरिहारो न भवति। अयमर्थः। भवन्मते द्रव्यादिषट्पदार्थे वस्तुत्वम्। ततः सुखसंवेदनयोर्वस्तुरूपो यो विषयविषयिभावः सम्बन्धः स किं द्रव्यादिष्वन्तर्भवति नो वा। अन्तर्भावपक्षः पुरः क्षोत्स्यते।

न्तर्भवति चेत्तर्हि सम्बन्धस्य न वस्तुत्वसिद्धिर्द्रव्यादिषु क्वापि तदनन्तर्भावात्। द्रव्यादिषट्कान्तर्गतस्यैव वस्तुत्वाभ्युपगमाच्च। अन्यथाभावस्यापि वस्तुत्वापत्तेः॥ १६०॥

अन्तर्भावपक्षं प्रतिक्षेप्तुमाह।

अन्तर्भावे वा समवायाभावादिभिः सह तत्संवेदनस्य सम्बन्धो न स्यादिति॥

समवायो युतसिद्धानामाधार्य्याधारभूतानामिहेति प्रत्ययहेतुः सम्बन्धः। अभावो भावप्रतिपन्थी। आदिशब्दात्संयोगग्रहस्तैः सह तत्संवेदनस्य वस्तुरूपविषयविषयिसम्बन्धज्ञानस्य सम्बन्धो न घटामटाट्येत। अयमर्थः। वस्तुरूपविषयविषयिसम्बन्धो यदि द्रव्यादिषट्पदार्थ्यामन्तर्भाव्येत तर्हि द्रव्यादिषु यथा कथञ्चित्तत्सम्बन्धो भवेत्। परं समवायेनाभावादिभिश्च सह विषयविषयिसम्बन्धसंवेदनसम्बन्धो न भवेत्। तथाहि समवायस्तावत् स्वयं सम्बन्धः। सम्बन्धे च सम्बन्धान्तरं यदि स्वीक्रियते तर्हि तत्रापि सम्बन्धान्तरं तत्राप्यन्यदित्यनवस्थालतालूता लालग्यात्ततः कथं समवायेन सह सम्बन्धस्तथाऽभावस्यावस्तुरूपत्वात् संयोगस्य च स्वयं सम्बन्धत्वात् ताभ्यां सहापि वस्तुरूपविषयविषयिसम्बन्धसंवेदनसम्बन्धो दुर्घट एव। एवञ्च त्वन्मते कुतो वस्तुस्वरूपो विषयविषयिसम्बन्धो येन वस्तुत्वे सतीति विशेषणद्वेपेण कृतकत्वहेतोरनैकान्तिकत्वमुक्तिः स्यादिति॥ १६१॥

प्रकारान्तरेण विषयविषयिसम्बन्धं शङ्कते।

अदृष्टादिवशात् कर्म्मकारकं विषयः। तज्जनितं ज्ञानं विषयीति चेदिति॥

अदृष्टं धर्म्माधर्म्मौ आदिशब्दादीश्वरादिग्रहः। कर्म्मेत्यादि। कर्म्म च तत् कारकञ्च कर्म्मकारकं ज्ञेयरूपं द्वितीयाविभक्त्यन्तं वस्त्विति यावत्। तज्जनितमिति विषयजनितम्। अयमर्थः। पुमान् यत्किञ्चिद्वस्तु पश्यति तद्धर्म्माधर्म्मादिवशात्। ततो यद-दृष्टादिप्राप्यं घटादि ज्ञेयं वस्तु स विषयस्तेन च विषयेण जनितं ज्ञानं विषयि। एतेन ज्ञानं स्वरूपेणैव विपर्य्ययस्तु स्वरूपेण न विषयः। किन्तु ज्ञानजनकत्वेनेत्युक्तम्। एवं सम्बन्धसिद्धौ सुखसंवेदनसम्बन्धस्य नश्वरत्वं तदवस्थमित्यर्थः॥ १६२॥

परिहरति।

नेश्वरज्ञानस्य नित्यस्यार्थैः सह सम्बन्धाभावप्रसङ्गादिति॥

यद्यर्थो ज्ञानस्य स्वरूपेण न विषयः किन्तु तज्जनकत्वेनेति मतम्। तदा नित्यस्येश्वरस्य ज्ञानस्यार्थैः सह सम्बन्ध एव न स्यात्तस्यादृष्टाद्यपेक्षितवस्त्वजन्यत्वात्। न हि यथा लौकिकं ज्ञानं विविधघटादिविषयेण जन्यते तथेश्वरज्ञानमपि जन्यते। नश्वरत्वापत्तेः। किञ्च ज्ञानस्य विषयजन्यत्वेऽभ्युपगम्यमानेऽस्मदादि-ज्ञानस्याप्यर्थैः सह सम्बन्धो न स्यादतीतभविष्यत्पदार्थानामसत्त्वेन कारणत्वाघटनात्। अस्ति च नित्यस्यापीश्वरस्य ज्ञानस्यार्थ-सम्बन्धो न च स कृतकोऽपि विनाशीति सम्बन्धानित्यत्वसाधकत्व-हेतुरसिद्ध इति॥ १६३॥

उपसंहरति।

तस्मात्कृतकत्वेऽपि नित्यसुखसंवेदनसम्बन्धस्य विनाशकारणाभावान्नित्यत्वं स्थितमिति॥

नित्यसुखसंवेदनसम्बन्धस्य यद्यपि कृतकत्वमस्ति। तथापि तद्विनाशकारणाभावात्तस्य नित्यत्वं स्थितं सिद्धमिति यावत्। कोऽर्थः। सम्बन्धः कृतकत्वेन स एव विनश्यति। यद्विनाशहेतुः स्याद्यथा घटादिविनाशे मुद्गरादिः। न हि नित्यसुखसंवेदनसम्बन्धविनाशे कोऽपि हेतुरस्ति। कृतकत्वमेव भविष्यतीति चेन्न। तस्य प्रागपि निर्लोठितत्वात्। तस्माद्विनाशकारणाभावात् सुखसंवेदनसम्बन्धस्य नित्यत्वं स्वतःसिद्धमिति। तथाच प्रयोगः। मुक्तसुखसंवेदनयोः सम्बन्धः कृतकोऽपि न विनश्यति विनाशकारणाभावात् प्रध्वंसाभाववदिति॥ १६४॥

अथ स्वाभिमतसिद्धिं दर्शयति।

तत्सिद्धमेतन्नित्यसंवेद्यमानेन सुखेन विशिष्टात्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष इति॥

नित्यसंवेद्यमानेनेति पदेन सांसारिकसुखातिव्याप्तिव्युदासः। सुखेनेति पदेन काणादाभिमते मोक्षप्रतिक्षेपः। आत्यन्तिकीति पदेन भवोद्भूतकादाचित्कदुःखनिवृत्तिव्यावृत्तिः। पुरुषस्येत्यात्मनः। अयमर्थः। सोपाधिसावधिकपरिमितचिदशमन्दिरसुखादपि निरुपाधिनिरवध्यपरिमितसुखसंसर्गोदया या सार्वदिकी दुःखनिवृत्तिः सा पुरुषस्य मोक्षो भवति॥ १६५॥

अथ येषां गुरूणां प्रसादात् न्यायरत्नप्राप्तिर्जज्ञुषी तानभि-
तुष्टूषुः शास्त्रकारः प्राह।

जिताः समुद्रा गुरुभिर्मदीयैरत्नं ददद्भिस्त्रिदशैरलभ्यम्।
यद्दीयमानं सततं द्विजानां प्रवर्द्धते चैव करोति मुक्तिम्॥

मदीयैर्गुरुभिरध्यापकैः समुद्रा जिग्यिरे। अत्र हेतुगर्भं विशे-
षणम्। किं कुर्वद्भिर्देवैरप्राप्यं श्रेयरूपं रत्नं ददानैः। कुतो
न्यायस्य रत्नत्वमित्याह। यत् न्यायरत्नं द्विजानां प्रतिपद्यमानं
वर्द्धत एव। तीक्ष्णबुद्धितयान्यान्यन्यायशास्त्रप्रणयनेन प्रैधते। एव-
कारः सर्वदापि वृद्धिप्रतिपादनार्थः। चकारस्य व्यस्तसम्बन्धान्न
केवलं वर्द्धते। किन्तु न्यायप्रदीपालोकावलोकितपरमात्मरूपतया
मुक्तिं परमानन्दरूपां करोति च। अयमर्थः। समुद्रा यद्रत्नं
ददिरे तत् सुरलभ्यं तैर्निर्म्मथ्य निष्कासितत्वात्। तच्च शश्वद्दितीर्य-
माणं क्षीयते। संसारमोहहेतुत्वात्। मुक्तिं न तनोति च।
अतः समुद्रदत्तरत्नादन्यादृशं न्यायरत्नं ददानैर्मद्गुरुभिः समुद्रा
जिता इति॥ १६६॥

त्रिदशैरपि यदतिदुर्लभं तत् न्यायरत्नं त्वया कथं प्राप्तमित्याह।

आचार्य्यमाराध्य मयापि लब्धं तन्न्यायरत्नं *सुपरोपकारि।
उत्सर्गिकैः स्वल्पपदैर्निबद्धं संसारमुक्त्यै खलु सद्द्विजानामिति॥

तत् पूर्वोक्तं न्यायरत्नं आचार्य्यं निजगुरुमाराध्य मयापि
प्राप्तम्। कीदृशं तत् परोपकारि परोपयोगनिष्ठम्। तत् त्वया किं

* Another reading स्व।

कृतमित्याह। उत्सर्गिकैर्निजबुद्ध्याऽनन्यथाकृतैः स्वल्पपदैः स्तोकाक्षरैर्गुम्फितम्। किमर्थमित्याह। संसारेत्यादि। उत्तमब्राह्मणानां भवविमोक्षायेति ॥ १६७ ॥

श्रीकृष्णर्षिमहेच्छ-गच्छ-मुकुटश्रीमन्महेन्द्रप्रभोः
शिष्यश्रीजयसिंहसूरिरखिलप्रामाणिकग्रामणीः।
एतां निर्मितवान् परोपकृतये श्रीन्यायसाराश्रितां
स्पष्टार्थां विवृतिं कृपापरवशैः सैषा विशोध्या बुधैः ॥
टीकेयं न्यायसारस्य मनस्तात्पर्य्यदीपिका।
मनीषिणां मनःसौधे सर्वदापि प्रकाशताम् ॥

इति श्रीकृष्णर्षिगच्छमण्डनश्रीमहेन्द्रसूरिशिष्यश्रीजयसिंहसूरिविरचितायां न्यायतात्पर्य्यदीपिकाभिधानायां श्रीन्यायसारटीकायामागमपरिच्छेदस्तार्त्तीयिकः सम्पूर्णः ॥

---

# सूचिपत्त्रम् ।

## INDEX OF WORDS.

अ ।


अकिञ्चनता २७६

अकूट २०९

अकृतकत्व ८

अकृतात्मन् ४०,२८६

अक्रम १५०

अक्ष ४

अक्षपाद ५१,६८,२३०,२३६

अक्षर ३४

अख्याति ६७

अग्निहोत्त २८,२०६

अङ्गक्रिया २७७

अङ्गयोग २७२

अचेतनत्व १७

अज २५

अजिन २५.१९८

अज्ञान २६,१६८,२०२,२०३

अणिमा ३७,२७०

अणु ७४.१२४,१३९

अतिदेश २२६

अतिप्रसक्ति ५२,५४,७२

अतिप्रसङ्ग ३७,५०,६४,७२, १७१,२१९,२६६,२६७

अतिमृत्यु ३९,२८१

अतिव्यापक ५४

अतिव्याप्ति ५२,७१,७३,१५५, २५९,२७६,२९३

अतिसामान्य १७

अतिसाह्लादि (?) २१३

अतीन्द्रिय २९,४०

अत्यन्त ४०

अत्यन्तावस्थान २८२

अत्निरूपत्व ६

अदृष्ट ३०,४१,८१,१०६,२९२

अदृष्टार्थ २९

अद्वैत २५४,२५९,२६५

अधर्म्म ३५,४७,७३,२५२,२५३, २७०,२७१,२७२,२८२, २९२

अधिक २५,१६८,२००

अधिकरण १५४
अधिकरणसिद्धान्त १५४
अधिकार ३२
अधिष्ठान ८०
अध्यवसाय १६.६६
अध्यात्म ३५
अध्यात्मशास्त्र २७३
अध्यास ५९
अनध्यवसाय २,६४,६५,६६
अनध्यवसित ७,१०,१११,११२, १२६,१२८,२०७
अननुभाषण २६,१६८,२०२
अननुयोग २७
अनन्त ३६
अनन्तरीयकत्व ८,९
अनन्यसम १९०,१९१
अनन्वय २०७
अनन्वितत्व १९८
अनभिरति ३९,२८०
अनवच्छिन्न १२४
अनवद्य ३६
अनवधारण १, २, ५७, ५८, ६४, ६५
अनवस्था १९,४९,५४,८१, १०५,११५,१७३,१८९,२२८, २३७,२९१
अनागत ३४
अनाधार ३६
अनिग्रह २७
अनित्य २,१९०
अनित्यजाति १६८
अनियम २८
अनियमकथा १९९
अनियामक २९
अनिर्देश २९
अनिर्वाच्यत्व २५५
अनिश्चय ८
अनिश्चित ७,५७
अनुगम ९०
अनुग्रह २,१६
अनुचिन्तन ३८
अनुत्पत्तिजाति १६८
अनुत्पत्तिसम २०,१७७
अनुपपत्ति ३४
अनुपयोगित्व २८
अनुपलब्धि १,२ २१.२२,२९, ५८, ६३, ८८, १८६, १८७, २१७,२१८

अनुपलब्धिजाति १६८
अनुपलब्धिसम २२,१८५
अनुपलम्भ २२,२४
अनुप्रसक्ति २४,१९६
अनुभव १,२,५,२९,५२,५४, ५५, ६७, ६८, ६९, ७१, ८७, ८८,८९, २३१, २३५, २३७, २३८.२३९,२४१,२४२,२४३ २४८,२५६,२८७
अनुमान २,५,१९,२१,२८,२९, ३१,३२, ३३, ३६, ४८, ५५, ६१,७०, ७१, ७२, ७३, ८५, ८७,८८,९४ ९९,१०८,१२८, १३७,१३९,१८२,२०८,२१४ २३०,२३१,२३५,२३७,२३८, २३९,२४१,२४२,२४३,२४८, २५६,२८७
अनुमानविरुद्ध ११,१२९
अनुमानैकदेशविरुद्ध ११
अनुमापक ५
अनुमेय ९२
अनुयुक्त २८
अनुवाद २६,२००
अनुवादक २३२,२३४
अनुवादकत्व ३१,२३१,२३२
अनेकधर्म्म ५८,६०
अनैकान्त १६४
अनैकान्तिक ७,१०,१०५,१११, ११२,११९,१२३,१२६,१३१, १३४,१९५,१९६,२०७,२१४ २५७,२६५
अनैकान्तिकता १६५
अनैकान्तिकत्व १७,२४,१६४, २१५
अनैकान्त्य ४०
अन्त:करण ३,७७,८३.१३४
अन्तर्गडु १५०
अन्तर्भाव ३२,२३०
अन्धतामिस्र २७४
अन्यतरासिद्ध ११८,११९
अन्ययोग ४५,२८२
अन्यसम ४०
अन्योन्याश्रय २३२,२३८
अन्वय ५,१२,३२,३३,३६,९०, ९१, ९९, १००, १०९, १३६, १३७,१४२,१४७,१४८,१४९, १७१,२०१,२३९,२४०,२४१, २४४,२६३

अन्वय दृष्टान्त १०२

अन्वयव्यतिरेक १०३

अन्वयव्यतिरेकिन् ५,६,९९, १००,१०१,१०६,१०८

अन्वयव्याप्ति १०९,२४०,२४१

अपकर्ष १८,१७१

अपकर्षजाति १६८

अपकर्षसम १८,१७१,१७२

अपदात्मक ९,१२२

अपनयन २४

अपर ३५,३७,२५५

अपरत्व १२७,१३२

अपरमात्मन् २७२

अपरात्म २५९

अपरिग्रह २७६

अपरिणाम २४३

अपरोक्ष २,७१,७२

अपलाप १९

अपवर्ग ३८,२५०.२७२, २८३

अपशब्द २८,२०८

अपसिद्धान्त २८,१५५,१६८, २०६,२०७

अपार्थक २५,१६८,१९८

अपूप १९८

अपेक्षा २१७

अपोह १,५५.५६

अपौरुषेय १९५,२१५,२१६

अप्रतिपत्ति १६,२३,१६५,१६७, १६९

अप्रतिभा १६८,२०३

अप्रतिभास २१६

अप्रतिषेध १९,२०

अप्रतीत २५,१९७,१९८

अप्रमाण ५३

अप्रमित ५०

अप्रयोजक २८

अप्रसङ्ग १८,१७०

अप्रसङ्गोन्नेयिन् १०८

अप्रसिद्ध ३२

अप्रसिद्धत्व ३१,२६५

अप्राप्तकाल २५,१६८,१९८, १९९

अप्राप्ति २०

अप्राप्तिजाति १६८

अप्राप्तिसमा १७५

अप्रामाण्य २९

अबाधित १४८

अबाधितविषय ६.१०० १०२, १०६
अभाव ३,५,१५.१८,२०,२१, २२,२५,२९,३०,३३,५०,७९, ८०,९१, २२२, २२५, २४२, २४३,२४४,२४५,२९१
अभिचार २०,१७६
अभिनिवेश २७३,२७४,२७५
अभिमान ३०,६२
अभियोग २७,३९
अभिव्यक्ति २१९,२२१
अभिव्यञ्जक २९,२१७,२१८, २१९,२२०,२२१
अभूत्वा भावित्व ३६
अभौतिक २
अभ्यास ८६,२७४
अभ्युपगम १५४
अभ्युपगमसिद्धान्त १५५
अभ्रान्त ८४
अमूर्त्त १७०
अमूर्त्तत्व ८,१०,१८,२३,१२४
अयुक्त ३
अयुत ८२
अयुतसिद्ध ८१,८२
अयोग २५
अयोगिप्रत्यक्ष २
अयोग्यत्व ३०
अरण्यानी २२३,२२७
अर्थ २.३,५,६,१५.१६,१७,२०, २१,२३,२५,२६ २८,३०,३१, ७०,७२,८३,८७,२५०
अर्थक्रिया १५०,२६५
अर्थक्रियाकारित्व १४९,२६५
अर्थख्याति ६७
अर्थपुनरुक्त २६,२००
अर्थान्तर २,२४,२५,१६८, १९६,१९७
अर्थापत्ति ३०,३२,३३,१९०, २२२,२२३,२३४,२३७,२३८, २३९,२४०,२४१,२४२,२७१
अर्थापत्तिजाति १६८
अलंकर्मीण २१६,२२१
अवञ्चकत्व २१३
अवधारण १५,५७
अवभासक ४
अवभासमान ७,१३
अवयव ५,२५,५१,९६,१३५, १४८,१५६,१९८,१९९,२३६

अवयविन् ३२,२३६

अवर्ण ११५

अवर्ण्य १८,१९,१७१,१७२,१७३

अवर्ण्यजाति १६८

अवाचकत्व ३१,२३१

अविच्छेद २४

अविज्ञातार्थ २५,१६८,१९७,१९८

अविद्यमानसपक्षविपक्ष १०

अविद्या ३५,२५२,२५३,२७४,२७५

अविनाभाव ५,१४,३२,३३,८७,८८,८९,९०,९१,९५,१०५,१०६,१०८,१४५,१७१,२१०,२३८,२३९,२४२

अविनाभावाभास ८७

अविनाभावित्व ४०,१४३,२५२,२८३

अविनाभाविन् १८,१७०,२१४

अविनाभूत १७०,१७१

अविरोधिन् ६

अविवेक ८

अविशिष्टत्व १९

अविशेष २,३,१६,१८,२१,२४

अविशेषजाति १६८

अविशेषसम २१,१८१

अविसंवाद २१५

अविसंवादकत्व ५६

अवृत्ति ६

अव्यतिरेक ३३

अव्यतिरेकिन् २४०

अव्यभिचारिन् ५२,८७

अव्यापक ५४,८९,९०

अव्यापकत्व ५४

अव्याप्ति १३,५४,१४०,१४१,१४२

अष्टाङ्ग २७५

अष्टाङ्गयोग ५१,७२,२७१

असत् २,२२

असत्ख्याति ६७

असत्त्वख्याति २५५

असत्प्रतिपक्षत्व ६,१००,१०३,१०६,१४८

असदुत्तर १८९

असद्भूत १७

असम २८५

असम्भवित्व ५४

असम्यक्त्व ५६

असाधक ७,१९,२४

असाधनाङ्ग १५

असिद्ध ७,८,९,१२,२२,३३,५४,
१११,११३,११४,११६,११८,
११९,१२२,१३५,२०९

असिद्धत्व ६,१३४,२१५,२६४

असिद्धि २०,२१,२५

अस्तित्व ९०

अस्तेय ३८,२७५,२७६

अस्मिता २७४,२७५

अहङ्कार ६२

अहिंसा ३८,२७५,२७६

अहेतु १६९

अहेतुत्व ७

अहेतुसम २०

अहेतुसमा १७९

आ ।

आकाङ्क्षा १५१,१९८,२३३

आकाश १,७,६.११,१२,१८,
२३,२९,६१,८२,१२५,२१४,
२८१,२८२

आकाशपुष्प १३

आगम २,२१,२९,३२,३३,३४,
३६, ४०, ४१, ४८, ६३, ७०,
७१, १३०, १३१,१३२,१८२,
२०६,२०९,२१०,२१२,२३४,
२३५,२३६ २३८.२४६.२४७,
२४८,२५६,२५८,२२३,२२६,
२३०,२४२,२८२,२८६,२८७

आगमविरुद्ध ११,१३०

आगमैकदेशविरुद्ध ११

आचार्य्य ५२,२६२,२६३

आत्मख्याति ६७

आत्मन् ३,१२,२३,३५,३७,३८,
३९,६१,७७,८२, ८३, ११५,
१३१,१३४,१८९,२४३,२५०,
२५१,२५४,२५५,१२५,२०९,
२६०,२६७,२६८,२८२

आत्यन्तिक ३४,३५,४०,४१,
२५०,२५३,२८४

आधार २१६,२६०

आधिदैविक २७३,२७४

आधिभौतिक २७३,२७४

आधेय २१६,२६०

आध्यात्मिक २७३

आनन्त्य २२,२३

आनन्द ४०,२८६

आनर्थक्य २५,२६

आनुमानिक ५२
आपत्ति ३८,२७४
आप्त २९,२१२,२२३,२२६
आप्तवचन ३०,२१२,२२३
आप्तवाक्य २२७,२२९,२३५,
२४७
आप्ति २१२
आभास ५६
आमलक ६
आयतन ३५
आरम्भक १५८
आराधन २७२
आराम २४
आर्ष ३,८४
आली २
आलोचना ८६
आश्रय २,३,२७,१२५
आश्रयाश्रित २३७
आश्रयासिद्ध ८,११६,२५८
आश्रयहीन १३,१४१
आश्रयैकदेशासिद्ध ८,११६
आश्रित ३
आसन ३८,२७५,२७७
आह्लाद २५१

इ।

इच्छा ७७,२८२
इतरख्याति ६७
इतरेतराश्रय ३१,२३२
इन्द्र ५०,५१
इन्द्रिय २,३,३०,३३,३४,३५,
३६,५२,६१,६२,६३,७१,७२,
७३,७८,८३,२१३,२१९,२४३,
२४४,२४५,२५०,२५१,२६०

ई।

ईशनी ३६
ईशित्व २७०
ईश्वर ८,२८,३८,४१,५१,५४,
५५,६४,७३,८३,१०६, १०८,
११६,२०६,२५८,२७३,२७४,
२९२

उ।

उत्कर्ष १८,१७१
उत्कर्षजाति १६८
उत्कर्षसम १८,१७१,१७२
उत्कर्षापकर्षसम १८
उत्तर १८,१९,२०,२२,३१,
१७०,१७४
उत्पत्ति २०,३०,२२१

उत्सर्गिक २९४
उदाहरण ५,१२,१३,१७,२३,२५,९६,१३५,१३६,१३७,१३८,१३९,२००
उदाहरणान्तर १९६
उदाहरणाभास १२,१३,१३८,१३९
उद्देश ५२
उपचार १७,४०,१६५,१६६,१८३,२३१,२८७
उपचारछल १६,१७,१६१,१६५,१६६
उपनय ५,१४,१५,९६,९८,१४५,१४६,१४७,१७४,१९४,२००
उपन्यास १५
उपपत्ति १६,१८,२०,२१,२२,२७,१९०
उपपत्तिजाति १६८
उपमान १४,३०,३१,३२,५५,६०,७१,१४५,२२२,२२३,२२४,२२५,२२६,२२७,२३०,२३१,२३३,२३४,२३५,२३६,२३७,२३८
उपमिति २२३
उपलब्ध ३०
उपलब्धि १,२,२९,३०,३६,५८,६३,२१७,२१८
उपलब्धिजाति १६८
उपलब्धिसम २१,१८२,१८३
उपलभ्भ २१,३०,३७,६३
उपसंहार १८,१९,१७४
उपादान २४,१३०,१८४
उपादेय २५०
उपाधि ८९,९०
उपाध्याय २६२
उपाय ३४,३५,२५०
उपालम्भ १५,१६,२४,१५३,१५४,१५५,१५९,१६०
उपासन ३७,३८,२७२,२७३,२७६
उपेक्षण २७
उभयविकल १३,१३९
उभयाव्यावृत्त १३,१४१
उभयासिद्ध ११८,११९
उष्ट्र २३१

ऊ।

ऊर्द्ध्व २१,२२

ऊर्द्धक्य ५८

ऊह २,३२,६४,६५,२२९,२३७

ऊहन २२८

ऋ।

ऋषि ८४

ए।

एकतानता ३९,७९

एकतानत्व २७५

एकदेश २३६

एकान्त १७६,१७७

ऐ।

ऐकाग्र्य ८६

ऐकान्तिक ११२

ऐतिह्य ३०,३४,२२२,२४७

ऐश्वर्य्य ३५,२५५

औ।

औपचारिक २५२

औलूक्य २८४

औलौक्य २८२

क।

ककुद १६६

कण्टक १६

कथा १५,२६,२७,२८,१५१,
१५२,१५३,१९६,२०३,२०४

कथाविच्छेद २७

कदाग्रह २७५

कन्था ४३

कन्दलीकार ४७

कपिल ८,११७,११८

कपोलताड़न २०७

कपोलवादिन २८

कम्बल १६,१६३

करण ५२,२६०,२७४

करणबन्ध ३८,२७७

कर्त्तृ ७,२४,३६

कर्म्म ४१,८४,१२७,२९०

कर्म्मकारक २९२

कर्म्मवासना २६२

कर्म्मेन्द्रिय ६२

कलधौत २५५

कल्पना १६,१७,८४

काकनाश २६४

काणाद २०९,२८४,२९३

कादम्बरी ४४

कादाचित्क ७,१०८,१०९,११८,
२१३,२१७,२५३,२९३

कारक ४१,२२२

कारण १,१७,२०,२१

कारिका २७४
कारीरी २११
कार्त्स्न २३६,२३७
कार्पास २६२
कार्म्मण १७६,२७४
कार्य्य ३६,४६,८८
कार्य्यकारणभाव २६२,२६४
कार्य्यसम १९०
कार्य्यसमजाति १६८
कार्षापण २०९
काल २,३,१०,२०,६१,७२, १२४,१२५,२१६
कालात्ययापदिष्ट ७,११,१०६, १११,११२,१२८,१३२,१३५, १४८,१९४,२०७,२५७
कालिदास २१६
किल्विष १३०
कुचेष्टा २०७
कुट १८०
कुण्ड २५,१९८
कुलरूप २४६
कुमारसम्भव २१५
कुम्भक ३८,२७७
कूट २०९
कूप २४
कृतकत्व ८,११,१८,१९,२३, २६,४०,११७
कृत्स्न २२,२३६
कृष्णपिंगच्छ ८६,२०८,२९५
केवलव्यतिरेकिन् ५,७,२३, ९९,१०८,११२,२२८,२२९, २४०,२४१
केवलान्वयिन् ५,६,२३,९९, १०५,१०६,१०७,१०८,१०९, २४१
कोरदूषक २६८
कोष्ठ ११६
कौतस्कुति २६४
कौरव्य ३३
कौष्ठ ३८
कौष्ठ्य २१८,२७७
क्रम २५,१५०,२६५
क्रमयोगपद्य २६५
क्रिया ५७
क्लेश ३८,५१,२७३,२७४,१७७, २८१
चैव्य २८४
चणिक १०,३७,४६,१२५,

१४९,२१४,२६२,२६४,२६५,
२६७

क्षेत्रज्ञ २५७,२५४,२५६.२७०,
२७१,२७२,२८६

ख।

खरविषाण १३

खारी २४२

ख्याति १६,६७,१५८

ग।

गगन १२

गणपति १

गन्ध ३,७५,७६

गमक ९१,९८

गम्य ९१,९८

गवय ३०,३१

गुण २४,५७,७४,८४,१२७,
१३४,२९०

गुरु १६,४३,१५६,२१६,२९४

गोचर २४९

गौड़ी १३०

ग्रन्थ ४८

घ।

घूर्णा २८४

घ्राण ७१,७३,७५,७६,८३

च।

चक्षुः २,३०,७३,७४,७५,८३

चतुरङ्ग १६,१५७,१५८

चतुर्लक्षणी २५६

चाक्षुष ७,७४

चान्द्रायण २७४

चार्वाक ८८

चित्त ३६

चिरल १९५

चीवर १७६

चेतना २६८

चेतः क्षेमा २७८

चेष्टा ३४,२२२,२४७,२४८

चैतन्य २६१,२६७,२६८

चोदनीय २७

चौर २७

छ।

छल १६,५१,१५५,१५६,१५९,
१६०,१६१

छलकवादिन् १६

छलवादिन् १७,१६४,१६६

ज।

जनक ४५

जप ३८,२७६

जय १६

जयश्री १८९

जयसिंह ८६,२०८,२९५

जल्प १६,५१,१५५,१५७,१५८, १५९,१६०,२०७

जल्पक २१४

जाति १६,१७,२३,५१,५७,८४, १५६, १५९, १६०, १६७, १६८,१६९,१७१,१७२,१७४, १७५,१८५,१८७,१८९,१९०, १९१

जातिवादिन् १८,१६९,१७०, १७५,१७८,१८२,१८३,१८७, १८८

जात्युत्तर २२,१९०

जीव ३६,५७

ज्ञप्ति १०९,१८४,२५१

ज्ञान २,३,४

ज्ञानाङ्कुर १६,१५३,१५७,१५८

त ।

तत्त्व १,१६,४३,५१,१५३, २५०,२६७

तत्त्वकौमुदी ६२

तत्त्वज्ञान ८,३५,३७,३८,५१, ११७,११८,२५३

तत्त्वनिर्णय १५

तत्त्वामृत ४९

तथागत ९५

तदुत्पत्ति २११,२१५

तन्त्र १५४

तन्मात्र ६२

तपः ३७,३८,२७०,२७२,२७४, २७६,२८१

तपस्या २७२

तमस् ११६,२७४

तर्क १५,४४,५१,६५,१५४, १५५,१५६,१५९

तर्कशास्त्र ४९

तर्णक १२३

तात्पर्य्यदीपिका २९५

ताथागत २३१

तादात्म्य २११,२१५

तामिस्र २७४

तीव्र ५

तुला १०,१२२

तुष्टि २७४

तूष्णीम्भाव २६

तृष्णा ३५,२५२,२५३
तैजस ७५
त्रिपुर ४७
त्रिरूप ७
त्रैकाल्य २०,२१,१७९,१८०, २०९
त्र्यणुक ८१
त्वच् ७३,८३

द ।

दत्त ४७
दर्शन ३५,२५४
दाड़िम २५,१९८
दार्ष्टान्तिक १७४,२६३
दिश् १०,६१,१२४,१२५
दुःख ३४,३५,३९,४०,४१, ७७,११६,२५०, २५१, २५२, २५९,२७३,२७४,२८०,२८१, २८२,२८३,२८५,२९३
दुर्दुरूढ़ १५९
दुर्वचन २८,२०७
दूषण ३६,१५२,१६०,१९७, २०२,२६३
दूषणसमर्थन १५५
दूषणान्तर १९६
दूषणाभास १५६
दृश्य ३
दृष्ट ५,९२
दृष्टान्त १२,१४,१८,१९,३०, ३१,४०,५१,९०,१०२,१२२, १३५,१३६,१३८,१४०,१४१, १४५,१७४,२००,२३०,२६३, २६४
दृष्टान्तदोष १४१,१४२
दृष्टान्ताभास १३६,१४२,१४३, २०७
दृष्टार्थ २९
देवर्षि ११,१३२
देवेश्वर २३४
देश २,३,३०,२०८
देशबन्ध ३९
दोष २७,३०,२५०
द्रढक १९९
द्रव्य २,१०,२४,४०,७४,८४, १२४,१२५,२९०
द्रोण २४२
द्विज १३०,१६४,१६५
द्वेष ३८,७७,२७३,२७४,२७५, २८२

द्व्यणुक ८१

ध ।

धर्म्म १,२,३,५,६,१८,१९,२०, २१,२३,३०,३५,४७,४८,५९, ७३,८२,८३,१७९,२५२,२५३, २७०,२७१,२८२,२९२

धर्म्मिन् ६,५९,९६,१०१,१७९

धारणा ३८,३९,६८,२७५,२७८

धिषणा २८३

धुर्य्य ४९

ध्यान ३८,३९,२७४,२७५, २७८,२७९,२८०

ध्वनि २६,१६५

ध्वस्त २८

न ।

नमस्कार ४४,४५,४६,४७

नमस्या ४९,५०

नर १५०

नागरिक २२३,२२६

नान्तरीयक ८५,८७,८९,९४

नास्तित्व ९०

निगमन ५,१५,९६,१४७,१४८, १४९,१५०,१५१,१९४,१९९, २००,२०१

निग्रह २७,१५६,१६२,१९५, २०२,२०८

निग्रहस्थान १५,१६,१७,२३, २४,२५,२६,२७,२८,३१.५१, १४९,१५०,१५६.१५९,१६०, १६३,१६५,२६६,१६७,१६८, १९२,१९३,१९४,१९६,१९७, १९८,१९९,२००,२०२,२०३, २०५,२०७,२०८,२३०

निग्रहाभियोग २०६

नित्य ९

नित्यजाति १६८

नित्यत्व २९

नित्ययोग १००

नित्यसम १८७

निदर्शन ३२,१३६,१३७

निमित्त ३.२२,३२,११५

नियम २८,३८,२७२,२७५, १७६

नियमकथा १९९,२००,२०८

निरनुयोज्यानुयोग २७,१६८, २०५

निरन्वय ३६,२६४

निरन्वयविनाश २६४

निरर्थक २५,१६८,१८७
निरवधि २९३
निरवयव १७२
निरुक्ति २५५
निरुपाधि २९३
निर्णय १५,५१,१४९,१५६
निर्देश २३,२४
निर्वर्त्तक ३४,२५०
निर्विकल्पक ३,४,३०,७२,८४,
८५,२२५,२२६,२४१
निवारण १५६
निश्चित ५७,८९,९५
निःश्रेयस ३४,५१,२४९
निःश्रेयसाङ्ग २७२
निषेध ५०,९९
निषेधमुख १८७
निष्पत्ति २०
निस्तर्हण २३४
नैयायिक ६७,१०६,११६,१९५,
२८४
नैरात्म्य २१४
न्याय १५,३१,४३,५२,१३०,
१५२,१८४,२०४,२६५
न्यायतात्पर्य्यदीपिका ४३,२०८
न्यायप्रदीप २९४
न्यायरत्न २९४
न्यायवादिन् १७,६२,१६४,१६९
न्यायशास्त्र ५२,२३७,२९४
न्यायसंग्रह ९९
न्यायसार २८,४१,४३,४४,८६,
२९५
न्यायसारटीका २०८
न्यून २५,१६८,१९९

प ।

पक्ष ५,६,७,१२,१४,१५,२४,
१०१,१११,१९६,२४०
पक्षत्रयव्यापक १०
पक्षत्रयैकदेशवृत्ति १०
पक्षधर्म्म ९८,१००
पक्षधर्म्मता ९८,१४८
पक्षधर्म्मत्व ६,१००,१०१,१०५,
१११,११३,१४६,१४७
पक्षवचन ५,९६
पक्षविपक्षव्यापक ९,१०
पक्षविपक्षैकदेशवृत्ति ९,१०
पक्षव्यापक ९,१०,११
पक्षसपक्षव्यापक १०
पक्षसपक्षैकदेशवृत्ति १०

पक्षाभास १२९
पक्षैकदेशवृत्ति ९,१०,११
पक्षरूप ६
पक्षवर्ग २०८
पक्षावयव ५,१५,९४,९५,९६,
१५१,१५२,१५४,१५५
पटी ४३
पद २१,२२,२३२
पदात्मक १२२
पदार्थ ३१,३२
पद्मक ३८,२७७
पर ३५,२५५
परतन्त्र १५४
परत्व १२७,१३२
परपक्ष ७,२६,३४
परब्रह्मन् २७५
परम १५
परमन्यायत्व १५१
परमाणु ११,१३,७३,८२,९३,
१२०,१३०,१३१,१३९
परमात्मन् ४३,२५५,२७२,२९४
परमाप्तत्व २९
परमेश्वर २८,२०६
परलोक ३७
पराजय १६,१७
परात्म २५८
परार्थ ५,९२,९३,९४,९५
परार्थानुमान १४७,२३५
परिग्रह १५
परिच्छेद २८,६९
परिणाम ११६
परिणामिन् ८
परिमाण २,७४
परिषद् २५,२६,२७,१९७
परीक्षा ३२,५२
परीहार ४७,२३७
परोक्ष ५,२९,३४,७१,८७,८८,
८९,१९५,२१०,२२९,२३३
परोपदेश ५
पर्य्यनुयोज्य २७
पर्य्यनुयोज्योपेक्षण १६८,२०४,
२०५
पर्य्यालोचन ३८
पर्वत् १९८
पलल १९८
पाटच्चर ४३
पाप १३०,१३१
पारभविक २६९

पारम्पर्य्य ८७
पारिशेष्य ३६
पिण्ड ३०
पिशाच २
पीड़ा ३५
पुनरुक्त २६,१६८,२००,२०१,
२०२
पुनर्भव ३५
पुराण २७१
पुरुष ८,१२,१७,११६,११७,
१३५
पुरुषत्व ८
पूजा १६,१५७
पूप २५
पूरक ३८,२७७,२७८
पूर्व्ववत् ९९,१०६
पूर्वाचार्य्य ६५
पैष्टी १३०
पौनरुक्त्य २०१
पौरुषेयत्व २१४
पौर्व्वापर्य्य २५,१९८
पौष्टिक २१३
प्रकरण ४३,४४,५१,५५,११३
१५४,१९०,२१४,२७०
प्रकरणजाति १६८
प्रकरणसम ७,१२,१११,११२,
११३,१३२,१३३,१३५,१४८,
२०७
प्रकरणसमता २५७
प्रकाश २,७२
प्रकृत २४,२५
प्रकृति ५१,६२,११६
प्रकृष्ट २
प्रजापति २१५
प्रणिधान ३८,४७,२७३,२७४
प्रतिष्ठान्त १९०
प्रतिज्ञा ५,६,१५,२३,२४,२५,
९६,९७,१०४,१०७,१४७,
१५०,१५६,१९९,२०१
प्रतिज्ञात ६,२३,२८
प्रतिज्ञान्तर २३,२४,१६८,
१९२,१९३,१९४
प्रतिज्ञाविरोध २४,१६८
प्रतिज्ञासन्न्यास २४,१५०,१६८,
१९४
प्रतिज्ञाहानि २३,२८,१६८,
१९१,१९२,१९३,१९५,१९६,
२०६,२०७

प्रतितन्त्र १५४
प्रतिदृष्टान्त २३
प्रतिदृष्टान्तजाति १६८
प्रतिनियत २०,३०
प्रतिपक्ष १५,१६,१५७,१९६
प्रतिपक्षसाधनदूषण १५५
प्रतिपत्ति ३०,३१,३२,३३
प्रतिपत्तृ ३१
प्रतिपादक १५,३१,२२८,२२९
प्रतिपाद्य २२८,२२९
प्रतिपिपादयिषा ५
प्रतिबन्धक २४१
प्रतिभाव २६
प्रतिभास ४३,६७
प्रतियोगिन् ५०,८०,२२५,२४४
प्रतिवादिन् १५,१६,२३,२५,
२६,११९,१५२,१५७, १५८,
१९१,१९७,१९८
प्रतिषेध १७,२१,२३,२४,२६,
६३,१७०
प्रतीकार ११९
प्रतीति ३१
प्रत्यक्ष १,२,४,५,६,२१,३०,
३१, ३३, ३७, ४३, ४८, ५५,
७०,७२,७४,७५,८१,८४,८५,
८६,८७,८८,९२,१२८,२१४,
२१२,२२४,२२५,२३०,२३१,
२४३,२४८,२६६
प्रत्यक्षत्व १०
प्रत्यक्षविरुद्ध ११
प्रत्यक्षाभास ७२,१६७
प्रत्यक्षैकदेशविरुद्ध ११
प्रत्यनीक २७४
प्रत्यभिज्ञा ६०,२१६,२६६,२६७
प्रत्यभिज्ञान ३७
प्रत्यय २४,३४,५८,२७९
प्रत्यवस्थान १६९
प्रत्यायकत्व २३१
प्रत्यारम्भक १५८
प्रत्याहार ३८,३९,२७५,२७८
प्रदीप ३०,३७
प्रधान ८,५१,११६,२५६
प्रध्वंस २२,४०,१८९
प्रपञ्च २५५
प्रबोध ५२
प्रमा २,६९,७०,८७,१२३,
२४९
प्रमाण १,२,६,७,१०,१५,२०,

२१, २९, ३०, ३१, ३२, ३३, ३४, ४४, ४५, ४७, ४८, ४९, ५०, ५१, ५२, ५३, ५४, ५५ ६५, ६७, ७०, ७१, ७५, ८७, १०२, १०८, १२२, १३०, १३८, १५४, १५५. १५६, १५९, २३०, २४८
प्रमाणशास्त्र १७५
प्रमाणाभास ५२
प्रमातृ २, ६८, ६९
प्रमित ५०; २२३
प्रमेय २, १०, ३४, ४८, ५१, ६८, ६९, ७०, १२१, १२२, १२३, २३०, २४९, २५०, २५३
प्रमेयत्व ६, ९, २१, २४, २६५
प्रयत्न ८, ९, ३४, ७७, ११५, १२१, २४८, २८२
प्रयोजन १५, २७, ३१, ५१, २३०
प्ररोह १६
प्रलय २८२
प्रवाद ३४, २४७
प्रवृत्ति १५, २०, २९, ४०, ५२, २५०
प्रशंसावाद १६५
प्रशस्तपादभाष्य ११५, १२०, १२५
प्रश्न १६, ३१,
प्रसक्त २०, २४
प्रसङ्ग ७, १७, १८, १९, २१, २७, २८, २९, ३०, ३१, ३३, ४०, ५०, ८५, १०९, १३६, १६७, १७६, १९०, २१७, २४१
प्रसङ्गजाति १६८
प्रसङ्गोन्नेयिन् १०८, १०९
प्रसञ्जन १७२
प्रसाद १५८
प्रसिद्ध १४, ३१
प्राकाम्य २७०
प्रागभाव २६८
प्राग्रहर ४३
प्राणायाम ३८. २७५, २७७
प्रात्यक्षिक ५२, ६०
प्राप्ति १९, २०, ७४, २७०
प्राप्तिजाति १६८
प्राप्तिसमा १७५
प्राप्त्यप्राप्तिसम १९
प्राप्यकारि ७३
प्राप्यकारित्व ११५

प्रामाण्य १९,२९,३१

प्रामाणिक १५८

प्राश्निक १६,१५७,१५८

प्रियाप्रिय २८३

प्रेत्यभाव २५०

फ।

फल २,२८,२५०,२६२

ब।

बहिर्व्याप्ति १४८,१५१

बहुव्रीहि १८३

बाध ५०,१०२,२६५

बाधक १५,३३,४०,२४४

बाधना २५२

बाधा ३५

बाध्यत्व ३७

बाङ्गाली ६५

बीज १६,३७

बुद्धि २१,२२,३४,३५,३६,४०, २५०,२५१,२६०,२८२

बुद्धिशुद्धि ३८

बुद्धीन्द्रिय ६२

बुद्ध २२३

बौद्ध ६९,१३६,१३८,१४९, १५५,१५८,१५९,२१३,२६३, २६५,२८७

ब्रह्मचर्य्य २७५,२७६

ब्रह्मन् ३५,३९,४०,२५५,२५९, २६५,२७६,२८०,२८६

ब्राह्मण १३०,१६४,१६५,२९५

भ।

भक्ति ३९

भगवती २६६

भगवान् ३५,५१,२५५,२५६

भट्टाचार्य्य ६१

भरत २४८

भव २७५,२९५

भागासिद्ध ८,११४,११५,१३७

भाट्ट ९५

भाव २१,२२,२१७

भावुक १८९

भाष्यकार ५८

भासर्वज्ञ २८,४१,४४,४९,५२

भूत ६२,२६७,२६८

भूतात्मन् २५४

भूयस्त्व ४६

भूषण ६७

भूषणकार ५६,६४,६५,६७ ८०,८७
भेद १,२
भौतिक २,६१,६२
भ्रान्ति ३७,४८,५८,८७

म ।

मन्त्र १७
मतानुज्ञा २७,१६८,२०४
मध्यस्थ २४,१८४
मनस् ३,१०,१३,६१,६२,७७, ११५,१२४,१२५,१३८,२५०
मरीचिका ६३
मशक २४
महत् ६२,७४
महामोह २७४
महायोगिन् ११८
महावाक्य ८६
महिम २७०
महेन्द्रसूरि ८६,२०८,२८५
महेश्वर ३५,३८,४८,५२,२५५, २५६
माणवक १६,२८७,२८८
माध्वी १३०
मानस ७०,७२,२४४
मिथ्याज्ञान २५२
मिथ्याध्यवसाय २,६६
मिथ्याभियोग २०५
मीमांसक ६,१०६,१०७,११८, १५१,१८५,२२३,२४५
मीमांसा २८,२०६
मीमांसाभाष्य ४४
मुक्त २८६,२८८
मुक्ति ४१,२८१,२८४
मुख्य १७,३३,३५
मुख्यार्थ १६५
मुमुक्षु ३८,२८०
मूर्च्छा ४०,२८५
मूर्त्त १७०
मूर्त्तत्व १७,१२४
मूलक्षति २६७
मोक्ष ३८,४०,४१,२४८,२५१, २७२,२७३,२८१,२८२,२८४, २८५,२८६,२८७,२८८,२९३
मोह ३८,४०,११६,२७३,२७४, २७५,२८४,२८५

य ।

यक्ष ३४
यत्नकामावसायित्व २७०

यम ३८,२७५,२७६

युक्त ३,८२,८३,८६

युक्ति २६५

युक्तावस्था ४

युगपत् २०,२९,३०

युतसिद्ध ८१,८२,२९१

योग ३८,५१,८३,२७३,२७४, २७५,२७७,२८९

योगबल ३७

योगशास्त्र २७७,२७९

योगाङ्ग ३९,२८०

योगिज्ञान ४

योगिन् ५१,७२.८३,८६,१०५, १२०,१३४,२१४,२४१,२५५

योगिप्रत्यक्ष २,३,४८,७२,८२

योग्यता ३४,१५४,१९८,२२३, २४६

योग्यत्व ३०

यौग १५४

र।

रजस् ११६

रथ्यापुरुष १४

रस ३,७६

रसन २,७२,७६,८३

रसिनी १९८

राग ३८,२७३,२७४,२७५

राजपुरुष १४

राद्धान्त २१३,२६२

रुद्र ३६,२५८,२५९

रूढ़ १९८

रूप २,३,५,६,३३,४०,७५

रूपित्व ११

रेचक ३८,२७७

ल।

लक्षण १,७,१३,१७,२९,४९, ५२,५३,५४,१३५,२४९

लक्षणसूत्र १९२

लक्षणा १६५

लक्ष्य १३५

लघिम २७०

लघुनैयायिक २२६

लयस्थ २५५

लाक्षा २६२

लाभ १६,१५७

लिङ्ग ५,३७,५२,७०,८९,९१, ९४, ९५, ९८, १४७, १४८, २१४,२३५

लिङ्गिन् ८९,९१,९५,२३५

लिपि २४,२१०,२२२,२४७
लीला २३७
लूता २९१
लोक १९,१६६,१७४,१७५,
२५२
लौकिक ५५

व ।

वक्तृदोष १४०
वचन १४,१५,२१,२५
वचनदोष १३,१४०,१४१,
वचनविघात १६
वज्रासन २७७
वञ्चक २१४
वट ३४
वनेचर २२३
वशित्व २७०
वस्तु ४,१५०
वस्तुदोष १४०,१४१
वर्ण २५,११५
वर्ण्य १८,१९,१७१
वर्ण्यजाति १६८
वर्ण्यसम १९,१७३
वर्ण्यावर्ण्यसम १९,१७२
वाक्छल १६,१६१,१६२,१६३
१६४,१६५,१६६
वाक्य ५,२५.२६.२९,३१,३२,
९४,९५,९६,१४८,२३२
वाक्योपस्कार १२१
वाग्देवी ४३
वाचक २१५,२३१,२३२
वाचकत्व १४८
वाचस्पति २६७
वाच्य ३२,२१५,२३१.२३२,
२३३
वाद १५,५१,१५२,१५३,१५४,
१५५,१५६,१५७,१५८,१५९,
१६१,२०३
वादित्व २०७
वादिन् ९,१५,१६,२३,२४,२५,
११९,१५२,१५७,१५८,१७५
वायु २९
वार्त्तिककार ५८
वासना २५२,२५३,२८०
वाह्येन्द्रिय ६,९
विकल्प १६,१८,१९,२३,३२,
४६,४७,५३,८४,१७१,२२५
विकल्पजाति १६८

विकल्पसम १९,१७२,१७३
विक्षेप २७,१६८,२०३
विजातीय ५८
विजिगीषु १६,१५३,१५८,१५९
विजिगीषुकथा १५,१६,१५२,
१५७,२०३
विज्ञान ४०,२८६
वितण्ड १५५
वितण्डा १६,५१,१५७,१५८,
१५९,१६०,१६१
विद्यमान-सपक्ष-विपक्ष १०
विद्या ८४
विधात्ट ३५
विधान ५०
विधि ६३,९९
विधिमुख १८७
विनाभूत १७१
विनाश ३६
विन्ध्य १७९
विपक्ष ६,७,१०,११,१००,
१०२,१०३,११२,११३,२४०
विपक्षव्यापक ९,१०
विपक्षसपक्षैकदेशवृत्ति १०
विपक्षैकदेशवृत्ति ९,१०
विपरीत ६,२२
विपरीतख्याति ६७,२५५
विपरीतव्याप्ति १३,१४०,१४१,
१४२
विपरीतान्वय २०७
विपर्य्यय १,२,१८,२५,२८,२९,
५५.५६,६६.६८,९१,२७४
विपर्य्यास २५,१९८
विप्रकृष्ट ३,५
विप्रतिपत्ति १,२,१५,१६,२३,
५८,६७,१६६,१६७,१६९
विप्रतिपन्न १५,१३६,१५०,
२२८
विभाग २९,५२,१३१
विमर्श ५८
विमृश्य १५
वियुक्त ३,८२,८३
विरुद्ध ७,९,१२,१५,१११,
११९,१२१,१२३,१९४,२०७,
२५७
विरुद्धविशेषणासिद्ध ८,११८
विरुद्धविशेष्यासिद्ध ८,११८
विरुद्धाव्यभिचारिन् १२,१२३,
१२५

विरोध १९,२०,२१,३२
विवाद ६,२३,२४,३६,४७, १३७, १५६
विवेक ४०,४७,२८३
विवेकख्याति ६७
विवेकिन् ४०
विशिष्ट ३४
विशेष १८,२०,२४,५५,९०, १२५,१२७,२९०
विशेषगुण १,९,१०,११,१२५, २८२
विशेषण ३,३४,७९,८०,८१, ८५,८६,८९,९०
विशेषणत्व २३
विशेषणासिद्ध ८,११४,११७
विशेष्य ३,३४,७९,८०,८१,८५
विशेष्यासिद्ध ८,११४,११७
विश्व ८
विषय २,३४,३५,३६,३७,४१, ७०,२४९,२५१,२६०
विषयत्व १०,३१
विषयविषयिभाव २९०
विषयविषयिसम्बन्ध २९१
विषयिन् ४१,२१९
विषाण २०
वीतराग १५,१६,१५३,१५७, १५८
वीतरागकथा १५,१५२,१५४, १५६,२०३
वीरासन २७७
वृत्ति ६,२०
वृद्धि २७६
वेद १७,२४,९४,१०३,११०, १६४,१६५,१९५,२१४,२१५, २१६,२१७
वैगुण्य २१३
वैधर्म्य १५,१८,१९,३०,३२, १३६,१४३,१४५,१७०
वैधर्म्यजाति १६८
वैधर्म्यदृष्टान्त १३८,१४०,१४६
वैधर्म्यनिगमन १४७
वैधर्म्योदाहरण १२,२६,१३७, १३८
वैधर्म्योदाहरणाभास १३,१४२
वैधर्म्योपनय १४,१४५,१४६
वैराग्य ३९,२८०
वैशेषिक २८२
व्यक्त ११६

व्यक्ति २२६
व्यङ्ग्य २४८
व्यञ्जक ३०,४५.४६,४७,२१६,
२२०,२२२
व्यतिरेक ५,१२,२६,३३,६१,
६०,६१, १०५, १३७, १३८,
१४२,१४८,१७१,२०१,२१३,
२१४,२२३,२४४,२८१
व्यतिरेकदृष्टान्त १०६,१३८
व्यतिरेकव्याप्ति १०७,१०६,
१३८,१४१,१४४,२६३
व्यतिरेकिन् ६६,१००,२७०
व्यधिकरण ११४
व्यधिकरणासिद्ध ७,११४
व्यपोह ५६,२८२
व्यभिचार ४५,४६,६०,६७,
११८,१३४,२१५
व्यभिचारी ८२,८८
व्यर्थविशेषणासिद्ध ८,११७
व्यर्थविशेष्यासिद्ध ८,११६
व्यवच्छेद २
व्यवच्छेदक ५०
व्यवस्था १६
व्यवहार ९०
व्याकरण २१७
व्यापक ५,६,७,३७,८६,६०,
६१,२६७
व्यापकत्व ५५
व्यापार ३३
व्यापिका ६
व्याप्ति ५,१४,५४,८८,८६,६०,
६२,१०१,१०२,१३६, १३८,
१३६,१४०,१४५,१६४,२०१,
२०६,२३८,२३६,२४१,२५७,
२६८
व्याप्य ६१,१०१
व्याप्यवृत्तित्व ६,१०१
व्यावृत्त ६,७
व्यावृत्ति ६
व्यास ८४,२४३
व्यासङ्ग २७
व्योम २४३
व्रत २७६
व्रात्य १७,१६४,१६५


श ।


शक्ति २७४
शक्र ३२,२२६,२३०,२३३,२३४
शङ्कित ८६,६०

शब्द १,३,११,१८,१९,२१,२२,
२६,२९,३०,३१,३२,५५,६१,
७१,७८,८०,९८,११५,१२१,
१२२,१३१,१९०,२११,२१२,
२१८,२१९,२२०,२२३,२२४,
२३०,२३१,२३२,२३३,२३४,
२३५,२३७,२४१,२६८
शब्ददोषवर्जन १५५
शब्दपुनरुक्त २६,२००
शरीर ३४,३५,३६,३७,२५०,
२५१
शरीरिन् २५८
शम्भु १,४४,४८,४९,५०,२०६
शाक्य ८५,८७,२११
शान्तिक २१३,२१५
शाब्द ५२,२०९
शास्त्र १४,१७,२५,४८,५५,
१७४,२५२
शास्त्राभिज्ञ १४४
शिव ३९,२७४,२८०,२८१
शिष्य १६,३२
शुक्लधर्म्मत्व १४
शुद्धि ३८,२७६
शेमुषी ११३,२३०
शेषवत् ९९
श्लोक ३५,२५४
श्रवण ७८
श्रुत १६६
श्रुति ३५,१३०,२५४,२५५
श्रोत्र ३,३०,७३,७८,८०,२१९

स ।

संकल्प २५१
संख्या २,३,३३,३४,७४,७७
संज्ञा ३,३०,३१,३२,३३,८४,
८५,२२३,२२६,२२७,२२८,
२२९,२३०,२३३,२३४
संज्ञाकर्म्म २३०
संज्ञिन् ३०,३१,३२,२२३,२२६,
२२७,२२८,२२९,२३०,२३३,
२३४
संटङ्क १५३,१५७,१९१
संप्रतिपन्न १३६,२२८
संप्रदाय १९५
संबन्ध ३१,३२,३३,३४,४१
संयम २७२
संयमन २७७
संयुक्त ३४
संयुक्तसमवाय २

संयुक्तसमवेतसमवाय ३

संयोग २,३,२९,३४,३७,७२, ७४,७९, १३१, २१५, २४५, २४६,२९१

संवरण २५

संवाद २१४

संवेदन ४१,७२

संशय १,२,४८,५१,५२,५३, ५५,५६,५७,५८,५९,६०,६१, ६३, ६४, ६५, ६६, ६७, ६८, १९०,२३०

संशयजाति १६८

संसार ३५,३६,३८,३९,४१, १३२,२५४,२५९,२७४,२७५, २८२,२८९

संसारिन् २५५,२५९,२७३, २८८

संस्कार ३०,३५,१६४,२२१, २५२,२६२,२८२

संस्कारक २१९,२२०

संस्कार्य ३०,२१९,२२०

संस्थिति १५४

संस्मृति २४४

संहति २३३

सङ्केत ३१,२१०,२१५,२२६, २२७,२२८,२२९,२४८

सजातीय ५८

सत् २

सत्त्व ६,१०,४३,६२,११६, २६५

सत्य ३८,२७६

सद्भाव २१,२२

सन्तान ११५,२६२,२६३, २६४,२८२,२८७

सन्ताप ३५

सन्दिग्ध ९०,२१५,२२८

सन्दिग्धविशेषणासिद्ध ८

सन्दिग्धविशेष्यासिद्ध ८,११७, ११८

सन्दिग्धसाधन १४,१४२,१४३

सन्दिग्धसाधनाव्यावृत्त १४,१४४

सन्दिग्धसाध्य १३.१४२

सन्दिग्धसाध्यसाधन १४४

सन्दिग्धसाध्याव्यावृत्त १४,१४३, १४४

सन्दिग्धाश्रय १४,१४३.१४४

सन्दिग्धासिद्ध ८,११७

सन्दिग्धोभय १४,१४३

सन्दिग्धोभयाव्यावृत्त १४,१४४
सन्देह १३
सन्ध्या ३८,२७६
सन्निकर्ष ३,७७,८१
सन्निधि १९८,२३३
सन्निपात ४
सपक्ष ६,७,९,१०,११,१२,२१, १००,१०२,१०३,१०४.१०५, ११२,११३,२४०
सपक्षविपक्षव्यापक १०
सपक्षविपक्षैकदेशवृत्ति १०
सपक्षव्यापक १०
सपक्षैकदेशवृत्ति १८३
सभापति १६,१५७,१५८
सभ्य २७
समय २९,३४,१५८,२१०, २४७,१४८
समवाय ३,३४,४१,७२,७४, ७५,७६,७७,७९,८०,८१,८२, १२७,२१५,२४५,२४६,२९०, २९१
समवायिन् ६९,८१,२३९, २४०
समवेतसमवाय ३
समाधि ३८, ३९, ८३, ८६, २७३, २७४, २७५, २७८, २७९, २८०
समानतन्त्र १५४
समानधर्म्म ५८,५९
समीकरण १७,१६७
समुदाय २४२
समुदायिन् २४२
सम्प्रदाय २४,२१४,२१५,२१७, २४७
सम्बन्ध २,३,२१५
सम्बन्धिन् ३
सम्भव ३०,३३,२२२,२४२
सम्भवत् १७
सम्यक् १,२,५,१२,२६,२९, ६६,७२,८७
सम्यक्त्व ५६
सर्ग ६२
सर्व्वज्ञ १४,३५,४३,५१,२५५, २५६
सर्वज्ञत्व २१३
सर्वतन्त्र १५४
सर्वपक्षव्यापी १८३
सर्व्ववित् ७

सविकल्पक ३,२०,३०,७२, ८४,८५,८६,२४१
सविकल्पिका २२५,२२६
सहकारिन् ३०,४५,२२५,२४१
सहस्राप्त २३३,२३४
सहेतुक १५
सह्य १७९
सांख्य ५१,६२,६३,११६,१५४, २५६,२७४
सांख्यसम्मति २७४
साक्षात् ९७
साक्षात्कार ७२
साक्षिन् २४,१९४
साङ्कर्य्य ४८
साजात्य ९२
सादृश्य ३०,३२,३७,२३५
साधक १५,१७७
साधन १,२,५,६,१४,१५,१६, २०,२५,२८,२९,३५,३६,५२, ८९,९०,९१,९२,९३,९४,९५, १३६,१४५,१५२,१५३,१५४, १५५,१५९,१६०,१९७,२६३
साधनत्व ५
साधनविकल १३,१३९
साधनसमर्थन १५५
साधनसामान्य ५
साधनाभास १४५,१५६
साधनाव्यावृत्त १३,१४०
साधर्म्य १५,१८,१९,१३६, १३७,१४३,१४५.१७०
साधर्म्यजाति १६८
साधर्म्यनिगमन १४७
साधर्म्यवैधर्म्यसम १६९
साधर्म्यसम १७०
साधर्म्योदाहरण १२,२६,१३७
साधर्म्योदाहरणाभास १३, १४०,१४२
साधर्म्योपनय १४,१४५,१४६
साध्य ५,६,७,१५,१८,१९,२०, २३,२५,४०,८९,९०,९१ ९४ ९६,११८,१२६
साध्यजाति १६८
साध्यत्व १९
साध्यविकल १३,१३९
साध्यसम १८,१९,१७१,१७२, १७३
साध्यसामान्य ५
साध्याव्यावृत्त १३,१४०,१४१

सान्तर ७३
सामर्थ्य ३१
सामान्य ३,५,३३,३६,५५,९०, ९९,११४,१२७,२९०
सामान्यफल १६,१७,१६१, १६४,१६५
सामान्यतो दृष्ट ५,९२ ९३, ९९,१००
सामान्यवत्त्व ६,८,९,११४
सामान्यव्याप्ति ३६,९३,२५७
सामान्याभाव ५
सार्थक २६,२००
सावधिक २९३
सावयव १८,१७२
सावयवत्व २१,२७,१२८
सास्ना १६६
साहचर्य्य ८७
सिद्धसाधन २१,१८२
सिद्धसाध्यत्व ११८
सिद्धान्त १५,२८,३२,५१,१५४, १५९,२०६,२३६
सिद्धि ७,२०,२२,२५,३१,२७४
सुख ३,६.१२,३४,३५,४०, ४१, ७७, ८२, ११६, २५१, २५२,२५९,२८२,२८३,२८५, २८६,२९३
सुगत १०२
सुरा १३०,१३१
सुरेश्वर २३३
सूत्र २०.२१,२३,३२,५१,५५, ६४.६५.९९,१३१,१३२,१५७, १५९.१६७,१६८,१८६,१८८, १८९,२३०
सूत्रकार ५८,७२,९७,१५४, १५९,२३६
सूत्रकृत् ९८,१४९,१५७,१९१
सूत्रविरोध ३१
सूनृत २७६
सूर्य्य ३६,३७
सृष्टि १०८
सोपाधि २९३
सोम २१५
सोमवंश १४,१४२,१४३,१४४
सौख्य २८६
सौगत १०१
स्थापना १६
स्थूल २
स्पर्श ३,७६

स्पर्शन २,३,७३,७४,७६

स्पार्शन ७४

स्फटिक ३७,२६६

स्फोट २४०

स्मरण २,३६,३७,६८,२२४

स्मृति ३०,६७,१३०,२३२

स्वपक्ष ७,२७,३३

स्वपक्षसाधन १५५

स्वभाव १,३,५,३२,८८,९०,९३

स्वरूप ४,५०

स्वरूपासिद्ध ७,११३,१२९

स्वर्ग १४,२८,६४,६८,७१,८८, १०६,१४४

स्वस्तिक ३८,२७७

स्वाध्याय ३८,२७३,२७४

स्वार्थ ५,९२,९३,९४,९५

स्वार्थानुमान १४७

ह।

हस्तिप्रतिहस्तिन्याय १६०

हान ३४, ३५, १८४, २५०, २५३, २८३

हृषीक ४३

हेतु ५,६,७,१२,१७,१९,२०, २१,२२,२४,२५,८९,९०, ९६,९८,९९,१००,१०१, १०४,११०,१११,११२,११४, ११९,१३५,१३७,१४२,१४८, १८३,२००,२०१,२१७

हेतुत्व १७,१८

हेतुहानि १९६

हेत्वन्तर २४,१६८,१९३,१९५, १९६

हेत्वाभास ७,१२,२३,२८, ३१,५१,१००,११०,१११, ११३,१२९,१३४,१३५, १५६,१६८,१९४,२०५, २०७,२१५,२३०

हेय ३४,२५०,२५१,२५२